THE

# CHOWKHAMBÂ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO. 366

THE

# VRĀTYATĀPRĀYAS'CHITTANIRNAYA

( *GREAT* and *SMALL* )

BY

NAGES'A BHATTA

and

THE

# VRĀTYATĀS'UDDHISANGRAHA

compiled by order of,

MAHARAJA JAYASINHA OF JAIPUR.

Edited With a Prefatory Note by
Pt. Nārāyana S'āstri Khiste, Sāhityāchārya,
Assistant Librarian, Govt Sanskrit Library,
Sarasvati Bhavana, Benares,

And

Pt. Jagannātha S'āstri Hoshing Sāhityopādhyāya,
Late Sādholal Research Scholar,
Govt Sanskrit College, Benares.

FASCICULUS I-[illegible]

*PRINTED-PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Vidya Vilas Press, North of Gopal Mandir, Benares*

1927.

चौखम्बा—संस्कृत—ग्रन्थमाला

( ग्रन्थ संख्या ६६ )

श्रीनागेशभट्टकृतः

# व्रात्यताप्रायश्चित्तनिर्णयः

( महान् लघुश्च )

श्रीजयसिंहकारितः

# व्रात्यताशुद्धिसङ्ग्रहश्च

साहित्याचार्य-खिस्ते-नारायणशास्त्रिणा
तथा
साहित्योपाध्याय-होशिङ्ग-जगन्नाथशास्त्रिणा
संशोधितः



प्रकाशकः-

जयकृष्णदास—हरिदासगुप्तः—

चौखम्बासंस्कृतसीरीज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८४

श्रीः

अथेदमुपक्रम्यते व्रात्यताप्रायश्चित्तविषयं ग्रन्थत्रयं मुद्रयित्वा प्रकाशयितुम् । अत्र (१)व्रात्यताप्रायश्चित्तनिर्णयः( महान् )= श्रीनागेशभट्टकृतः (२)व्रात्यताप्रायश्चित्तनिर्णयः ( लघु. )=ग्रन्थकर्तृनामनिर्देशाभावेऽपि ग्रन्थारम्भतदन्तर्गतबहुविषयसाम्यात्, नागेशभट्टस्य लघुबृहद्भेदेन द्विधा ग्रन्थनिर्माणप्रकारस्य बहुशोऽन्यत्र दर्शनात् अयमपि नागेशभट्टनिर्मित एवेति निर्विवादमेव । (३)व्रात्यताशुद्धिसङ्ग्रहः=श्रीमन्महाराजजयसिंहकारितोऽनेकैर्विद्वद्भिः कृतः । तत्र लघुर्बृहन् वा व्रात्यताप्रायश्चित्तनिर्णयः 'कलौ क्षत्रियपदव्यवहार्याणां दशविंशतिपुरुषपर्यन्तं स्मर्यमाणोपनयनाभावानां तदग्रेऽप्यस्मर्यमाणोपनयनानां संस्कारो न वेति' सन्देहं पुरस्कृत्य 'एवञ्च तादृशक्षत्रियाणामुपनयनाभावः सिद्धः' इति सिद्धान्तं व्यवस्थापयति । अग्रे च स्पष्टमेवोक्तं नागेशेन -'यावत्परीक्षितो जन्म यावन्नन्दाऽभिषेचनम् । एतद्वर्षसहस्रं तु कलौ पञ्चदशोत्तरम्' ॥ इति विष्णुपुराणीयवचनानुरोधेन वस्तुतः कलौ उपनयनयोग्यक्षत्रियाभाव एव । 'एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा । कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते' ॥ अत्र त्रीणि भुज्यते इत्यनेन तुर्ये कलौ पञ्चदशोत्तरसहस्ररूपात्यल्पकालं तत्सत्ता सूच्यत इति च ।

अपरोऽनेकविद्वन्निबद्धो व्रात्यताशुद्धिसङ्ग्रहस्तु विविधप्रमाणोपष्टम्भैः कलावपि क्षत्रियसत्तां तेषामुपनयनार्हत्वं च व्यवस्थापयति । किञ्च-'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति वचनानुरोधेन शूद्रग्राहिकया ब्राह्मणादीनामयमयं ब्राह्मणः क्षत्रियो वेति निर्णयासम्भवेन पश्वाद्यपेक्षया मानुषकारवैलक्षण्यस्यावयवसंस्थानरूपस्य प्रत्यक्षत्वेन मानुषत्वजातेर्ज्ञातुं शक्यत्वेऽपि मानुषत्वावान्तरजातिभूतब्राह्मण्याद्यभिव्यञ्जकसंस्थानविशेषस्य चक्षुरादिमानगम्यस्याभावेन ब्राह्मण्यादिनिर्णयो भवितुं नार्हति । अतस्तत्र तत्र तेषु तेषु जनपदेषु जनसमुदायो विरोध्यविरोधी

वा यं यं समुदायं यद्यद्वर्णसमूहतया विना विगानं परम्परया वर्णयति स स तावत्तत्तद्वर्णसमुदायरूप एव । एवञ्चाऽविगीतव्यवहार एको जातिनिर्णायकः, एवमेव ये स्वस्वजात्युचितधर्माचरणरहिता अपि तत्तज्जात्युचितधर्माचरणशीलैः सह भोजनादिव्यवहारमविगीतमाचरन्ति, ये तद्व्यवहारभाजस्तेऽपि तज्जातय एव, तद्व्यवहाराभावेऽपि तद्व्याप्यधर्मव्यवहारादपि व्यापकजातेर्निर्णयो भवतीत्यादिसिद्धान्तो व्यवस्थापितः । एवमेव प्रयागादिप्रदेशेषु ब्राह्मणा इति व्यवह्रियमाणा राजपुत्रकन्योद्वाहिनो द्विकुलीना ब्राह्मणा अविगीतव्यवहाराद्ब्राह्मणा एव तत्सम्बन्धिनो राजपुत्रा अपि क्षत्रिया एव । इत्थमेव पुरोहितगोत्रेण परम्परया गर्गादिगोत्रव्यवहाराद्वणिज इत्यव्यभिचरिताविगीतव्यवहारात् अगरवालाः सर्वेऽपि तृतीयवर्णाः प्रायेणोपनयनादिसंस्कारभाजः शिष्टैः परिगृह्यमाणा भवन्ति । एते सर्वेऽपि प्रायश्चित्ते कृते तूपनयनार्हा भवेयुरिति । इत्थमनयोर्भिन्नकर्तृकयोर्ग्रन्थयोः प्रतिपाद्ये वैलक्षण्यम् । नात्र वयं स्वमतं किञ्चिदपि प्रतिपादयामः । विचक्षणानां पुरो द्वयमपीदं न्यस्तं, येभ्यो यथा रोचते तैस्तथा प्रमाणजातमवलम्ब्य तथा विधेयमिति सरलः पन्थाः ।

## २

जयपुरमहीमहेन्द्रेण श्रीमता राजाधिराजेन श्रीसवाईजयसिंह-नरपतिना क्षत्रियपदव्यवहार्याणामुपनयनार्हतामभिलषता प्रायो भारतवर्षीयाः सर्वेऽपि पण्डिताः सम्मेलिताः । तत्र पण्डितसमाजे प्रवृत्त मत-द्वैविध्यम् । राजानुगमनप्राप्तजीविका वैभवानुभावविस्मारितस्मृति-रहस्या एके विद्वांसो व्रात्यताशुद्धिसद्भावं मानयन् । यत्र यथाकथ-ञ्चित् क्षत्रियनामभृतां वैश्यनामभृतामप्युपनयनार्हत्वं निष्कण्टकमु-द्दङ्कितम् । लक्ष्मीं तृणाय मन्यमाना अपरे शास्त्रमर्यादासंरक्षणप्राणाः श्रीनागेशभट्टा राजानुरोधमपि निर्धूय शास्त्रोपदिष्टमेवाध्वानमक्षुण्णं व्यवस्थापयन्तो लघुं महान्तं च व्रात्यताप्रायश्चित्तनिर्णयं मानयन्-इति शृणुमो वृद्धमुखेभ्यः ।

३

प्रस्तुतप्रबन्धानामेकैकमेव पुस्तकं राजकीयसरस्वतीभवनपुस्तकालयस्थमशुद्धिबहुलमवलम्ब्य प्रवृत्ते मुद्रणकार्ये निसर्गजा अशुद्धी रुपेक्ष्य ग्रन्थसारमात्रमवगाहनीयं सुधीभिः । साम्प्रतिके शुद्धिप्रचारप्रचुरप्रभावे काले यस्य कस्यापि येन केनाऽपि यथा तथा वा क्रियमाणा शुद्धिर्न शास्त्रमुखप्रेक्षामपेक्षते इति साम्प्रतिकाना शुद्धिकार्यधूर्धराणां सविधेऽनपेक्षित एवायं प्रबन्धसमुच्चयः, किन्तु ये शास्त्रैकदृशो धर्मप्राणास्ते सकौतुकमथ नाऽतिप्राचीन पण्डितानां विवादः प्रेक्षणीयो विचारणीयश्च ।

एतत्प्रबन्धत्रयमुद्रणे प्रचुरं साहाय्यमाचरतां साहित्योपाध्याय होशिङ्ग-जगन्नाथशास्त्रिणां महान्तमुपकारभारं वहन् धन्यवादैस्तेषामुचितमर्हणमाचरामि ।

येषां प्रेरणया मार्गप्रदर्शनानुग्रहेण प्रवृत्तोऽहमत्र कार्ये, तान् काशिकराजकीयपाठालयप्रधानाध्यक्षान् श्रीगोपीनाथकविराजशर्ममहोदयान् सविनयमनन्तैर्धन्यवादैः, 'चौखम्बासंस्कृतसीरीज्'नामकपुस्तकमालाध्यक्षं बाबूजयकृष्णदासश्रेष्ठिवरांश्च शताधिकैराशीर्वचनैश्च सम्भाव्य विरमामीति शिवम् ।

| | |
|---|---|
| सरस्वतीभवनम् । | विदुषां कृपाभाजनम्— |
| काशी । | नारायणशास्त्री खिस्ते. |

॥ श्रीगणेशाय नमः ॥

# व्रात्यताप्रायश्चित्तनिर्णयः ।



अथ कलावब्राह्मणत्वे सति शस्त्रग्रहणप्रजापालनमात्रेण क्षत्रियसादृश्येन क्षत्रियपदव्यवहार्याणां दशविंशतिपुरुषपर्यन्तमस्मर्यमाणोपनयनानां तद्वंशेऽपि तद्वंश्यानामुपनयनसंस्कारो भवति न वेति सन्देहे निर्णयः क्रियते। तत्र नैव भवतीति निर्णयः, क्षत्रियसादृश्येन तथाव्यवहारेऽपि मुख्यक्षत्रियत्वाभावात्। तथा च अर्जुनपौत्रपरीक्षिद्राज्यकाले मैत्रेयं प्रति पाराशरेणोपदिष्टे विष्णुपुराणे चतुर्थेंऽशे सूर्यचन्द्रवंश्यानां तत्तत्क्षत्रियाणां वंशसमाप्तिमुक्त्वा परीक्षिद्राज्योत्तरं क्षेमकान्तान् चन्द्रवंश्यान् उक्त्वोक्तम्—

ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ॥

इति। मात्स्येऽप्येवम्—'संस्थास्यति स वै कलौ' इति। तत्र तुर्यपादः—भागवतेऽपि नवमे—

ब्रह्मक्षत्रस्य वंशोऽयं प्रोक्तो देवर्षिसत्कृतः।
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ॥

इति। अत्र वंशक्षत्रियाणां ब्राह्मणत्वप्रतिपादकत्वादस्य ब्रह्मक्षत्रयोनित्वमुक्तम्। वंश इत्युक्त्या राज्यहीनोऽपि वक्ष्यमाणपाण्डववंशातिरिक्त एतद्वंशो नास्तीति सूचितम्। ततो भाविन इक्ष्वाकून् सुमित्रान्तानुक्त्वोक्तम्—

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।
यतस्तं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ॥

इति। स इक्ष्वाकुवंशः। अन्येषां सूर्यवंश्यानां वंशसमाप्तिः पूर्वमुक्तैव। नवमे भागवतेऽपि—'सुमित्रो नाम निष्ठान्तः' इत्युक्तम्। निष्ठा वंशस्थितिस्तस्या अन्त इति तदर्थः। 'इक्ष्वाकूणामयं वंश' इति च पूर्ववदेव। तत्र 'संस्थां प्राप्स्यति वै कलौ' इति चतुर्थचरणपाठस्तत्र रिपुञ्जयान्ता भाविनो मागधा बार्हद्रथा उक्ताः। तत्र जरासन्धादिरिपुञ्जयान्तं सहस्रवर्षपर्यन्तं राज्यमुक्तम्। रिपुञ्जयमुक्त्वा—

बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम्।

इति नवमे भागवतेऽपि। तत्र जरासन्धमारभ्याऽयुतायुपर्यन्तं पञ्चशतं वर्षाणि परीक्षित्कालिकायुतायुतो रिपुञ्जयान्तं पञ्चशतं वर्षाणीति व्यवस्थातो नाऽग्रिमग्रन्थविरोधः। ततो रिपुञ्जयमपुत्रं हत्वा तदमात्येन स्वपुत्रस्य प्रद्योतस्य राज्यं दत्तं, तद्वंशे चाऽष्टत्रिंशदुत्तरमब्दशतं राज्यमुक्त्वा ततः शिशुनागवंशे महानन्द्यन्तं द्विपष्ट्यधिकवर्षशतत्रयं राज्यमुक्तम्। द्वादशे भागवतेऽपि—

शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम्।
समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः॥

इति। तद्रूपान्तरत्वान्न विरुद्धम्। ततो महानन्दिसुतः शूद्रागर्भोद्भवोऽतिलुब्धो महापद्मो नन्दः परशुराम इवाऽपरोऽखिलक्षत्रान्तकरो भविता। तत प्रभृति शूद्रा भूमिपाला भविष्यन्ति। स चैकच्छत्रामनुल्लङ्घितशासनो महापद्मः पृथिवीं भोक्ष्यतीत्युक्तम्। अत्र परशुरामोपमया स्त्रीबालावधि निर्दयं हन्तृत्वं सूचितम्। महापद्म इत्यस्य तावत्सङ्ख्यधनस्तावत्सैन्य इति चार्थः। परशुरामेणैव कतिपयानामहननमपि स्यादत आह—अखिलक्षत्रान्तकारीति। तेन क्षत्रियसामान्याभावः सूचितः। तदेवोक्तम्-'भूमिपालाः' इति। नन्दस्योग्रत्वेऽपि अनुलोमसङ्कराणां मातृजातीयत्वाच्छूद्रा इत्युक्तम्। तद्वंशीयक्षत्रियान् हत्वा तत्सन्तानभूता उग्रा-

स्तत्तद्राज्ये स्थापिता इति तात्पर्यम्। भागवते द्वादशे—

महानन्दिसुतो राजन्! शूद्रागर्भोद्भवो बली।
महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत्॥
ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः।

इति नन्दादीनामुग्रत्वात् शूद्रप्राया इत्युक्तम्। एतेन राज्याधिकारिणो मागधा एवाऽनेन नाशिता न तु देशान्तरस्थाः। शूद्रराज्योक्तिरपि मगधदेशविषयैवेति निरस्तम्। सामान्यप्रवृत्तवाक्यस्य सङ्कोचे मानाभावात् वक्ष्यमाणवाक्यविरोधाच्च। मागधरिपुञ्जयकाल एव सर्वक्षत्रियवंशशाखानाशाच्च। एतच्चाऽग्रे स्फुटं भविष्यति। ततो नन्दपुत्राणाञ्च शतवर्षपर्यन्तं राज्यमुक्तम्। ततश्च कौटिल्यप्रधानत्वात् कौटिल्यः—वात्स्यायनविष्णुगुप्तादिपर्यायः—चाणक्यो नन्दपुत्रानुच्छिद्य नन्दस्य कनीयस्यां भार्यायां मुरासञ्ज्ञायां जातं चन्द्रगुप्तं राज्येऽभिषेक्ष्यति। मौर्याणां सप्तत्रिंशदधिकं वर्षशतं राज्यम्। ततोऽन्त्यं मौर्यं तत्सेनापतिः शुङ्गजातीयः पुष्पमित्रः हत्वा राज्यं करिष्यति। तद्वंशे द्वादशाधिकं वर्षशतं राज्यम्। ततोऽन्त्य शुङ्गं देवभूतिमपुत्रं तदमात्यः कण्वजातीयो वसुदेवनामा ब्राह्मणो हत्वा स्वयं राज्यं करिष्यति। तद्वंशे शतत्रयं पञ्चचत्वारिंशच्च वर्षाणि राज्यम्। ततस्तद्भृत्य आन्ध्रजातिः शिप्रकनामाऽन्त्यं कण्वं सुशर्माणं हत्वा स्वयं राज्यं करिष्यति। तद्वंशे षट्पञ्चाशदधिकचतुरब्दशतं राज्यम्। ततः सप्ताऽऽभीराः, दश गर्दभिल्लाः, षोडश कङ्का इति। भागवते—अष्टौ यवनाः, चतुर्दश तुषाराः, चतुर्दश पुक्कसा इति। भागवते—त्रयोदश गुरुण्डाः, एकादश मौना नवनवत्यधिकत्रयोदशवर्षशतानि राज्यं करिष्यन्ति। तेषु छिन्नेषु कैलिङ्किला यवना भूपतयो भविष्यन्ति। तेषां षडधिकवर्षशतं राज्यमिति। भागवते—'मूर्धाभिषिक्तस्तेषां विन्ध्यशक्तिः'—इत्युक्तम्। मूर्धाभिषिक्तो मुख्यः। मूर्धसिक्त इति पाठे तादृशाक्ष-

भ्रियवन्मुख्य इत्यर्थः । ततः पुरञ्जयादयो नव षड्वर्षाऽधिकं सर्वशत राज्यं करिष्यन्ति । तत्पुत्रास्त्रयोदश वाह्लीकास्ततः पुष्पमित्रादयस्त्रय, ततस्त्रयोदश मेकलाः, सत्यकौशला निषधा नव, ततो मागधो विश्वस्फूर्जिसंज्ञोऽन्यान् वर्णान् करिष्यति । कैवर्तपटुपुलिन्दसंज्ञान् म्लेच्छप्रायान् ब्राह्मणान् राज्ये स्थापयिष्यति । 'उत्साद्याऽखिलक्षत्रजातिम्' इत्युक्तम् । क्षत्रजातिमित्यस्य क्षत्रजातिमुख्यादिरूपामित्यर्थः । एतेन तावत्पर्यन्तमुग्रादिजातिस्थितिः । अग्रे साऽपि नास्तीति सूचितम् । अतो नैतद्बलान्नन्दोत्तरं क्षत्रियसत्तासिद्धिरिति बोध्यम् । भागवतेऽपि—

मागधानान्तु भविता विश्वस्फूर्जिः पुरञ्जयः ।
करिष्यत्यपरान्वर्णान् पुलिन्दपटुमद्रकान् ॥
प्रजाश्चाऽब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः ।
वीर्यवान् क्षत्रमुत्साद्य पद्मावत्यां स वै पुरि ॥
गङ्गाद्वारादाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ।

इति । अत्र क्षत्रपदं तज्जन्यत्वादुग्रपरम् । मागधानामित्यस्य मगधदेशीयानां सङ्कीर्णराज्ञामित्यर्थः । ततोऽन्ते व्रात्यद्विजाऽऽभीरशूद्राद्याः समकालं पृथ्वीं भोक्ष्यन्ति । ततोऽनुदिनमल्पह्रासाद्धर्मस्य व्यवच्छेदादर्थस्य च सङ्क्षयो भविष्यति । ततश्च धनमेवाऽभिजनहेतुः, रुचिरेव दाम्पत्ये हेतुः, आढ्यतैव साधुत्वे हेतुः इत्येवमनेकदोषोत्तरं भूमण्डले सर्ववर्णेषु यो बलवान् स भूपतिर्भविष्यतीत्युक्तं 'सर्ववर्णेषु' इति । अस्याऽवशिष्टेषु ब्राह्मणवैश्यशूद्रेष्वित्यर्थः । तेऽपि कलावतिप्रायत्यतया शूद्रत्वेनैव पूर्वं गणिता इति न विरोधः । 'अक्षत्रियाश्च राजानः' इति वक्ष्यमाणहरिवंशात् । एतेनैतद्बलात् क्षत्रियसत्तासाधनमपास्तम् । यदि तु—

कलौ न क्षत्रियाः सन्ति कलौ नो वैश्यजातयः ।
ब्राह्मणाश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम् ॥

इत्युक्ते —

नाधीयन्ते तदा प्रय न यजन्ते द्विजातयः।
उत्सीदन्ति तदा चैव वैश्यैस्सार्द्धन्तु क्षत्रिया ॥

इति मात्स्योक्तेश्च वैश्यस्याऽप्यभावस्तदा सर्वपदं वहुपदञ्च व्यक्तिविषय बोध्यम् ।

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः।

इति भागवते । तत्तद्वृत्त्या ब्राह्मणेष्वेव विट्क्षत्रव्यवहारो द्रष्टव्य । एवमेव 'शूद्रप्रायेषु वर्णेषु' इत्यपि व्याख्येयम्। येऽपि तत्तद्वृत्त्या तत्तद्वर्णत्वेन व्यवह्रियमाणास्तेऽप्याचारतः शूद्रतुल्या एवेत्यर्थ । तथा त्रेतायां ब्राह्मणोत्तरा प्रजा, द्वापरे ब्रह्मक्षत्रोत्तरा इत्युक्त्वा कलौ शूद्रदांशोत्तरा इत्युक्त द्वादशे भागवते । एव क्रमेण कलियुगे क्षयमायाति सर्वधर्मेषु विप्लवङ्गतेषु भगवतो वासुदेवस्यांऽश शम्भलग्रामप्रधानविष्णुयशसो गृहे कल्किरूपोऽवतीर्य सकलदस्युम्लेच्छदुष्टाचरणचेतसामशेषाणां क्षय करिष्यति स्वधर्मेषु चाऽखिलं जगद स्थापयिष्यति । अनन्तर प्राचेतसाऽर्घकलेरवसाने प्रबुद्धाना तेषां जनपदानाममलस्फटिकविशुद्धमतयो भविष्यन्ति । प्रबुद्धानामित्यनेन सत्त्वगुणोद्रेको दर्शितः। तेषाञ्च वीजभूतानामशेषमनुष्याणा परिणतानामपि तत्कालकृतानामपत्यप्रसूतिर्भविष्यति, तेन कालेन कृतानामादितशक्तानामित्यर्थ । तानि च तदपत्यानि कृतयुगधर्मानुसारीणि भविष्यन्तीत्युक्तम् । भागवते—

दिव्याब्दाना सहस्रान्ते चतुर्थे तु पुनः कृते।
भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥

इति । चतुर्थे तु कलावतीते सति यदा नृणां मन आत्मप्रकाशक भविष्यति तदा कृतं भविष्यतीति तदर्थः ।

गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम्।
तत्याज तनुराज्ये यो धर्मपुत्रो युधिष्ठिरः॥
विपरीतानि दृष्ट्वा च निमित्तानि स पाण्डवः।
याते कृष्णे चकाराऽथ सोऽभिषेकं परीक्षितः॥
प्रयास्यन्ति यदा चैव पूर्वाषाढां महर्षयः।
तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति॥

अथ कलिप्रवृत्तिमाह—

ते तु पारीक्षिते काले मघास्वासन् द्विजोत्तमाः।
तदा प्रवृत्तश्च कलिर्द्वादशाब्दशताधिकः॥

इति दैवमानेन सन्ध्यासन्ध्यांशाभ्यां सह स द्वादशाब्दशतात्मकः कलिः पूर्वसन्ध्यारूपेण प्रवृत्तोऽपि सन्ध्यारूपमतिक्रम्य स्वेन रूपेण प्रवृत्तः प्रकर्षेण वृत्त इत्यर्थ इति रत्नगर्भादयः। भागवतटिप्पणे श्रीधरोऽप्येवमेतद्वक्ष्यति—

यस्मिन्कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि।
प्रतिपन्नं कलियुगं तस्य सख्यां निबोध मे॥
त्रीणि लक्षाणि वर्षाणां द्विजमानुषसंख्यया।
षष्टिं चैव सहस्राणि भविष्यत्येष वै कलिः॥

इति स्वपुराणकथनकालादेतावान् भविष्यति मुख्यः कलिरित्यर्थः। सन्ध्यांशश्चोत्तरसन्ध्यारूपस्तदुत्तरभावीति बोध्यम्। किञ्च—

तदा नन्दात्प्रभृत्येष कलिर्वृद्धिङ्गमिष्यति।

इत्युक्तम्। नन्दात्प्रभृति भूलोके क्षत्रियाणामभावान्न्यायदण्डाभावेन कलेर्वृद्धिरिति भावः। अत एव 'नन्दान्तं क्षत्रियकुलम्' इति सकलजनप्रसिद्धिः। अत्र नाशकवाच्यन्तशब्देन बहुव्रीहिः। मोक्षधर्मेषु नारायणीये—

द्वापरस्य कलेश्चैव सन्धौ पार्यवसानिके।
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति॥

इत्युक्त भगवता। पार्यवसानिके समाप्तिकल्पे इत्यर्थः। एवञ्च

द्वापरान्ते हरेर्जन्म यदुवंशे भविष्यति।

इति ब्राह्मवाक्ये द्वापरधर्माणां केषाश्चिदनुवृत्तेः कलिसन्ध्यापि तत्वेन गृहीतेति बोध्यम्। तत्रैव मुचुकुन्दप्रस्तावे—

ततः कलियुगं ज्ञात्वा प्राप्तप्राय ततो नृपः।
नरनारायणस्थानं प्रययौ गन्धमादनम्॥

इत्युक्तेः—

यस्मिन् दिने हरिर्यातो दिवं सन्त्यज्य मेदिनीम्।
तस्मिन्दिनेऽवतीर्णोऽयं कालकायः कलि॰ किल॥

इत्युक्तेश्च। भागवते, एकादशे—

मया निष्पादितं ह्यत्र देवकार्यमशेषतः।
यदर्थमवतीर्णोऽहमशेन ब्रह्मणाऽर्थित॰॥
न वस्तव्यं त्वया चेह मया त्यक्ते महीतले।

हरिवंशे मुचुकुन्दजागरे तत्प्रश्ने कृष्णवाक्यम्—

त्रेतायुगे प्रसुप्तोऽसि विदितो मेऽसि जागरात्।
इद कलियुगं विद्धि किमन्यत्करवाणि ते॥
महीतले जनोऽधर्मरुचिः सद्यो भविष्यति।
कलौ युगे—

इत्युद्धव प्रति भगवदुक्तेश्च। एतेनेदानीं कलेः सन्ध्येवास्तीति मन्वोक्तिः परास्ता। गदापर्वणि भारते—अधर्मेण दुर्योधनवधं दृष्ट्वा क्रुद्ध बलदेवं प्रति 'प्राप्तं कलियुगं विद्धि' इति कृष्णवचनाच्च।

आसन्न विप्रकृष्ट म्रा यतः कालं न विद्महे।
तस्माद्द्वापरसंविद्ध युगान्त स्पृहयाम्यहम्॥
प्राप्ता वयन्तु तत्कालमनया धर्मतृष्णया।
आदद्यां परम धर्मसुखमल्पेन कर्मणा॥

इति हरिवंशे जनमेजयोक्तेश्च। काल मोक्षस्य द्वापरेण समधर्माण

संविज्ञमधर्माधिक्याद् दूषितं युगान्तं कलिम्, अतोऽस्माभिः कलौ जन्म प्रार्थितमित्यर्थः। अल्पेन कर्मणा अनायाससाध्येन भगवन्नामकीर्तनेन।

महापद्मादिनन्देन क्षत्रियाणां नाशेऽपि पुनः प्रवृत्तिमाह—

देवापिः पौरवो राजा मरुश्चेक्ष्वाकुसम्भवः।
महायोगबलोपेतौ कलापग्रामसंश्रयौ॥
कृते युगे इहागत्य क्षत्रप्रवर्तकौ हि तौ।
भविष्यतो मनोर्वंशे बीजभूतौ व्यवस्थितौ॥
एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा।
कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते॥
कलौ तु बीजभूतास्ते केचित्तिष्ठन्ति भूतले।
यथैव देवापिमरू साम्प्रतं समवस्थितौ॥

ग्रन्थान्तरेऽपि—ततो मरुः पुत्रोऽभूत्, योऽसौ योगमास्थायाद्यापि कलापग्राममाश्रितस्तिष्ठति। आगामियुगे सूर्यवंशक्षत्रप्रवर्तयिता भविष्यतीति क्षत्रस्य क्षत्रियवंशस्य प्रवर्तकौ भविष्यतः। यतो मनोर्वंशे सोमसूर्यवंशरूपे बीजभूतौ व्यवस्थितावित्यर्थः। कलेः सन्ध्यायामेव क्षत्रियसत्त्वात् त्रीणि युगानि भुज्यते इत्युक्तमिति रत्नगर्भः।

तत्र सन्ध्याशब्देन कलिप्रारम्भ उच्यते—यथा सूर्योदयोत्तरमपि सूर्यास्तात्पूर्वमपि किञ्चित्कालं सन्ध्याव्यवहारस्तद्वत्कलिप्रवेशानन्तरमपि सहस्रवर्षपर्यन्तं सन्ध्याव्यवहार इति तदाशयः। वैश्यानामप्यभावे तु एतावेव तेषां प्रवर्तकौ बोध्यौ शुद्धवैश्याया अपि क्षत्रियाभ्यामुत्पत्तिसम्भवात्। अत्र क्षत्रपदञ्च ब्राह्मणावरद्विजोपलक्षणम्। भागवतेऽपि—

देवापिर्योगमास्थाय कलापग्राममाश्रितः।
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति॥

तान् वद—

इति ऋषीणां प्रश्ने—

येषु सस्थास्यते तत्र ऐलेक्ष्वाकुकुलं शुभम् ।
तान् सर्वान् कीर्तयिष्यामि भविष्ये कथितान् नृप ॥
तेभ्योऽपरे तु ये त्वन्ये उत्पत्स्यन्ते नृपाः पुनः ।
उग्राः पारशवाः शूद्रास्तथाऽन्ये ये बहिश्चराः ॥
आन्ध्राः शकाः पुलिन्दाश्च कलिङ्गा यवनास्तथा ।
कैवर्ताभीरशबरा ये चाऽन्ये म्लेच्छसम्भवाः ॥
पर्यायतः प्रवक्ष्यामि नामतश्चैव तान्नृपान् ।

इत्युपक्रमे क्षेमकान्तमैलं वंशमुक्त्वा—

ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं स संस्था प्राप्स्यते कलौ ॥

इत्युक्तम् । तत्र पारशवा विक्रमादयः । ततोऽन्ते—

पूरोर्वंशस्त्वया सूत ! भविष्यति निवेदितः ।
सूर्यवंशे तथा ये तु भविष्यास्तान् वदस्व नः ॥
तथैव यादवे वंशे राजानः कीर्तिवर्द्धनाः ।
वसन्ति ज्ञातयो याश्च राज्यं प्राप्स्यन्ति सुव्रत ॥

इति ऋषीणां प्रश्ने तत्र सुमित्रान्तं सूर्यवंशमुक्त्वा—

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
सुमित्रं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ ॥

इत्युक्त्वा— ।

प्रतिबाहुरभूद्वंशः सुबाहुस्तस्य चाऽऽत्मजः ।
सुबाहो शान्तसेनस्तु शतसेनस्तु तत्सुतः ॥
शतसेनाद् यदोर्वंशः संस्थां प्राप्स्यति वै कलौ ।

इत्युक्त्वा इतरसर्वक्षत्रियवंशाध्यासमाप्त्यावसरेण—

अत ऊर्ध्वं प्रवक्ष्यामि मागधा ये बृहद्रथाः ।

इत्यादिना रिपुञ्जयान्तास्ते उक्ताः । श्रीधरस्वाम्यपि द्वादशे सर्वसोमवंशशाखापेक्षया मागधवंश एवैकश्चिरस्थायीत्याह । अतो महानन्द्यन्तं क्षत्रबन्धून् शैशुनागानुक्त्वा तत्समकालं चतुर्विंशत्यैक्ष्वाकान् सप्तविंशतिपाञ्चालान् चतुर्विंशतिकाशेयान् अष्टाविंशतिहैहयान् द्वात्रिंशत्कलिङ्गान् पञ्चविंशत्यश्मकान् षट्त्रिंशत्कुरून् अष्टाविंशतिमैथिलान् त्रयोविंशतिशूरसेनान् विंशतिवीतिहोत्रान् क्षत्रबन्धूनेव नृपानुक्त्वा—

महानन्दिसुतश्चापि शूद्रायां कलिवर्धनः ।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तको नृपः ॥
ततः प्रभृति राजानो भविष्याः शूद्रयोनयः ।
सर्वक्षत्रमथोत्साद्य भाविनार्थेन चोदितः ॥
एकराट् स महापद्म एकच्छत्रो भविष्यति ।

तत्सन्ततौ राज्यं वर्षशतं, ततो मौर्याणां सप्तत्रिंशदधिकं शतं, ततः शुङ्गानां द्वादशाधिकं वर्षशतं, ततः काण्वायनानां पञ्चचत्वारिंशदधिकत्रिशतवर्षाणि राज्यं, तत आन्ध्राणां षट्पञ्चाशदुत्तरं चतुःशतं, ततः सप्ताभीराः, सप्त गर्दभिल्लाः, अष्टादश शकाः यवनास्तुषाराश्चतुर्दश, त्रयोदश मुण्डाः, ततः कैलिङ्किला यवना इत्याद्युक्तम् ।

राजानः शूद्रभूयिष्ठाः पाषण्डानां प्रवृत्तये ।

इति चाऽप्युक्तम् । क्वचिद्ब्राह्मणानां राज्यदर्शनाद् भूयिष्ठा इत्युक्तम् ।

महापद्माभिषेकात्तु यावज्जन्म परीक्षितः ।
एवं वर्षसहस्रन्तु ज्ञेयं पञ्चाशदुत्तरम् ॥

परीक्षिद्राज्यात्तु पञ्चदशोत्तरं सहस्रं, पञ्चत्रिंशोऽर्वाचीनं तस्य राज्यप्राप्तिरिति स्वयं पुराणविदाम् ।

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ।
प्रतिपन्नं कलियुगं प्रमाणं तस्य मे शृणु ॥

श्रीणिशतसहस्रन्तु वर्षाणां तत्स्मृतं बुधैः ।
षष्ठिवर्षसहस्राणि सङ्ख्यात मानुषेण तु ॥
दिव्य वर्षसहस्रन्तु तदा सन्ध्या प्रवर्तते ।
नि शेषे तु तदा तस्मिन् कृत वै प्रतिपत्स्यते ॥
देवापि पौरवो राजा ऐक्ष्वाकुश्चाऽत्र वै मरु ।
महायोगबलोपेतौ कलापग्राममाश्रितौ ॥
एतौ क्षत्रप्रणेतारौ नवविंशे चतुर्युगे ।
सुवर्चा मरुपुत्रस्तु ऐक्ष्वाकाद्यो भविष्यति ॥
नवविंशे युगेऽसौ वै वंशस्यादिर्भविष्यति
देवापिपुत्र सत्यस्तु ऐलाना भविता नृप ॥
*क्षत्रप्रवर्तकावेतौ भविष्यौ च चतुर्युगे ।*

अत्र पुत्र इत्युपलक्षणम् । एकैका कन्याऽपि तयोर्बोध्या । भागवते नवमे जरासन्धपुत्रवंशे रिपुञ्जयान्तान् भाविनो राज्ञ उक्त्वा द्वादशे—

स्वधामाऽनुगते कृष्णे यदुवंशविभूषणे ।
कस्य वंशो भवेत्पृथ्व्यामेतदाचक्ष्व मे मुने ॥

इति राज्ञ प्रश्न । स्ववंशस्य क्षेमके सस्थाया नवमे उक्तत्वात्–अय प्रश्न । तत्र सोमवंशशाखापेक्षया चिरस्थायी मागधवंश एवेत्याशयेन शुकस्योत्तरम्—

योऽन्त्यो पुरञ्जयो नाम भविष्यो बार्हद्रथ ।

*तस्याऽमात्यस्तु शुनक —*

इत्यादिना रिपुञ्जय एव पुरञ्जय । तेन च पञ्चशतवर्षोत्तरमेव कलौ सङ्करादिदुष्टा क्षत्रिया इत्युक्तं स्पष्टमेव । यत्तु वनपर्वणि भारते कलिधर्ममुपक्रम्य—

परस्परवधोद्युक्ता मूर्खा पण्डितमानिन ।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टका ॥

क्षत्रियाश्चाऽपि वैश्याश्च विकर्मस्था नराधिप।
अल्पायुषः स्वल्पबलाः स्वल्पवीर्यपराक्रमाः॥
ब्राह्मणाः क्षत्रियाः वैश्याः सङ्कीर्यन्तः परस्परम्।
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः॥

इत्युक्तम्। तत्र रिपुञ्जयहननोत्तरं तदमात्यादिषु महानन्दान्तं पञ्चशतं वर्षाणि क्षत्रियाणां राज्यसत्त्वात्तेषाञ्च विकर्मस्थतायाः स्पष्टत्वात्तेषां मात्स्ये क्षत्रबन्धुत्वेन विशेषणाच्च न तद्विरोधः। तत्रैव—

अन्त्या मध्या भविष्यन्ति मध्याश्चाऽन्त्या न संशयः।
ब्राह्मणाः क्षत्रिया वैश्या न शिष्यन्ति जनाधिप॥
एकवर्णस्तदा लोको भविष्यति युगक्षये।

इत्युक्तेः। युगक्षये कलावन्त्याः शूद्राः मध्याः क्षत्रियाः वैश्याः शूद्रास्तत्सदृशाः स्वधर्मं सर्वथा त्यक्त्वा तिष्ठन्तीत्यर्थः। तत्र क्षत्रियवैश्यनाशो मात्स्यवैष्णवयोः स्पष्टमेवोक्तः सर्वथोच्छेदरूपः। ब्राह्मणनाशस्तु स्वधर्महान्येति बोध्यम्। विप्राणामपि शूद्राचारत्वादेकवर्ण इत्युक्तम्। यथा सत्ययुगे सर्वेषां धर्मनिष्ठत्वादेकवर्णत्वं मात्स्यादिषूक्तम्। किञ्च—

द्वापरे व्याकुलो धर्मः प्रणश्यति कलौ पुनः।
वर्णानां द्वापरे ध्वंसः सङ्कीर्यन्ते तथाश्रमाः॥
नैका श्रुतिः स्मृतिश्चैव निश्चयो नाऽधिगम्यते।
द्वापरे सन्निवृत्तास्तु वेदा नश्यन्ति वै कलौ॥
ब्राह्मणैः कल्पसूत्रैश्च भाष्यैर्वेदैस्तथैव च।
व्याकुलो द्वापरेऽप्यर्थः क्रियते भिन्नदर्शने॥
पूर्वस्वभावास्सन्ध्यासु अवतिष्ठन्ति पादतः।

इति मात्स्येन द्वापरेऽपि केषाञ्चिदेव स्वधर्मेऽवस्थितिर्बोधनेन सम्प्रति कलौ स्वधर्मेऽवस्थितिं लोकानां वदन्तो भ्रान्ता एवेत्यलम्।

नारदीयेऽपि—

भविष्यन्ति कलौ प्राप्ते राजानो ह्यन्त्यजातयः।

इत्युक्तम्।

ननु क्षत्रियशूद्राभ्यामुत्पन्नयोरस्य पितृत उपनयनादिप्राप्ति कुतो न—

यस्माद्बीजप्रभावेन तिर्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते॥

इति मनूक्तेरिति चेन्न, मनुनैव तेषां तदनधिकारबोधनात्। तथा हि—

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥

तुल्यासु सवर्णासु। पत्नीष्विति विवाहितास्वित्यर्थकं, यतस्सयोगे एव तथाप्रयोगात्। अक्षतयोनिषु अन्यामुक्तासु।

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।
अव्रात्य इति स्यात शूद्रधर्मा स जातितः॥
व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः।
उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः॥

इति देवलस्य। आनुलोम्येनेत्युत्तरास्वपि।

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्॥

अनन्तरजातासु विवाहितक्षत्रियादिषु तान् मातुर्हीनजातीयत्वदोषेण गर्हितान् पितृसदृशान् न तु तज्जातीयानाहुरित्यर्थः। एवञ्च ते मातृजातेरुत्कृष्टाः पितृजातेर्हीनाः। एषां मूर्धावसिक्तमाहिष्यकरणेत्याख्या याज्ञवल्क्येनोक्ता।

प्रकारान्तरात्तु जातानां धर्म्यं विद्यादिमं विधिम्।

इमं वक्ष्यमाणमित्यर्थः।

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।

ऊढायामिति शेषः ।

निषादः शूद्रकन्यायां यः पारशव उच्यते ।
क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ॥
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ।

जन्तुरित्यनेन निषादादप्यस्य नीचता सूचिता ।

विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः ॥

सवर्णापुत्रेभ्यो हीनाः । यद्यपि पूर्वपूर्वस्मादुत्तरोत्तरे हीनाश्चेत्यर्थः ॥

पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् ।
ताननन्तरजातांस्तु मातृदोषात् प्रचक्षते ॥

अनन्तरेत्युपलक्षणम् । अनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः पूर्वमुक्तास्तान् मातुर्हीनजातित्वदोषात् अनन्तरनाम्नो मातृजातीयान् प्रचक्षते, तेन मातृजातिसंस्कारस्तेषामित्यर्थः । एवञ्चोग्राणामुपनयनाभावः स्पष्ट एवोक्तो मनुना । 'बीजं प्रशस्यते' इति तु योनिधर्माद्यनधिकारे बीजं प्रधानमिति सारम् । अप्सरसः शापेन गृहीतदेहान्तरा अपि धर्माद्यनधिकारिण एवेति बोध्यम् ।

[पूर्वं हि] बीजं प्रधानमित्येके [प्रशंसन्ति] क्षेत्रमन्ये मनीषिणः ।
बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः ॥

तत्रोभयप्रशंसा सावर्णविषये उभयप्राशस्त्य एव ब्राह्मणत्वाद्यङ्गीकारात् । क्षेत्रप्रशंसा मूर्धावसिक्तादिविषये, बीजप्रशंसा प्रतिलोमविषये । ते हि बीजदोषवशादधमा एवेत्युक्त्वा तद्विषयेऽपि बीजप्राधान्यं वक्तु तेनेदमुक्तम् । तथा च मनुरेव—

जातो नार्यामनार्यायामार्यादार्यो भवेद् गुणैः ।
जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥
तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।
सुबीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा ॥

तथार्याज्जात आर्यायां सर्वसंस्कारमर्हति ।

इति । अनार्या नारी शूद्रा । आर्यः शूद्रात्किञ्चिच्छ्रेष्ठ इत्यर्थः । पाकयज्ञाद्यनुष्ठानादिति भाव । अनार्यात् शूद्रात्, आर्या त्रैवर्णिकी, अनार्यः सर्वधर्महीनः । तथाऽनुलोमान्तरं तेनोक्तम्—

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः ॥

इति ।

अथ प्रतिलोमानाह—

आयोगवश्च क्षत्ता च चण्डालश्चाऽधमो नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥

क्रमेण वैश्याक्षत्रियाविप्रासु वैश्यान्मागधवैदेहौ क्षत्रियाविप्रयोरिति शेषः। 'क्षत्रियात् सूत एव तु'-विप्रायामिति शेषः ।

प्रतीपमेते जायन्ते परेणाऽपसदास्त्रयः ।

अपसदा पुत्रकार्यादपगताः । लोमहर्षणोऽपि प्रतिलोमज एव । तथा हि—

लोमानि हर्षयाञ्चक्रे श्रोतॄणां यः स्वभाषितैः ।
कर्मणा प्रथितस्तेन लोमहर्षणसंज्ञया ॥

इति । कौर्मे—

वैन्यस्य तु पृथोर्यज्ञे वर्तमाने महात्मनः ।
सुत्यायामभवत्सूतः प्रथमं वर्णवैकृतम् ॥
ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः ।
जुहावेन्द्राय दैवेन ततः सूतो व्यजायत ॥
शिष्यहव्येन सम्पृक्तमभिभूतं गुरोर्हविः ।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ॥

इति वायुपुराणे । वर्णवैकृतं 'ब्राह्मण्यां क्षत्रियात्सूतः' इति याज्ञवल्क्ययुक्तं विलोमजत्वम् । अयं रोमहर्षण एव ।

अग्निकुण्डसमुद्भूत सूत निर्मलमानस ।

इति रोमहर्षणं प्रति शौनकवाक्यस्य पुराणान्तरे दर्शनात् । अस्य च तपोबलात् व्याससङ्कल्पात्पुराणाऽधिकारः । तत एव शौनकादिसङ्कल्पाद् ब्रह्मासनार्हत्वम् ।

अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ।

इति बलभद्रं प्रति शौनकोक्तेः । 'रोमहर्षणमासीनम्' इत्युपक्रम्य-

कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः ।
धर्मपालांस्तथैवाऽस्मान्वधमर्हति दुर्मतिः ॥

इति तत्रैव बलभद्रोक्तेः । अयं न ब्राह्मणः अत एव तद्वधस्त्वजानतैवाचरितस्त्वया ब्रह्मवधो यथेत्यनेन ब्रह्मवधसादृश्यमुक्त्वा—

ततश्च भारते वर्षे परीत्य सुसमाहितः ।
चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यति ॥

इति अल्पमात्रप्रायश्चित्तमुक्तम् । सूतानां मन्त्रित्वाऽश्वसारथ्यादाविव पुराणाध्ययनतच्छ्रावणयोरप्यधिकारः । परन्त्वन्त्ययोर्ब्राह्मणसङ्कल्पादेव । यथा व्याससङ्कल्पादध्ययनं शौनकसङ्कल्पाच्छ्रावणं तदीयाऽतितपोबलाच्च तयोस्तथा सङ्कल्पेन न हीनता । 'परमभ्यादरीत' इति निषेधस्य नाऽत्रावकाशः, तेन सूतमात्रस्य नाऽत्राधिकारः । मन्त्रित्वादि तु सञ्जयाऽधिरथादेः प्रसिद्धमेव । 'ब्रह्मासनं दत्तम्' इति अत्युक्तेश्च ब्राह्मणानामेव श्रावणेऽधिकारो नाऽन्येषामिति सिद्धम् । अत एव जनमेजयस्य पुराणश्रावयितृत्वं वैशम्पायनस्य स्मर्यते । तत्पुत्रस्योग्रश्रवसोऽपि तत्सङ्कल्पादेव पुराणाध्ययनश्रावणादावधिकार इति सिद्धम् । एतेन लोमहर्षणो ब्राह्मण एव । सूतशब्दस्तु कथाप्रवक्तृत्वसामान्यात् प्रोत्साहनाय प्राचीनराज्ञां शौर्यादिकथाकथनस्याऽपि तद्वृत्तित्वादित्यपास्तम् ।

जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः ।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कुटकः स्मृतः ॥

क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेन उच्यते ॥
द्विजातयः सवर्णासु जनयन्त्यव्रतास्तु यान् ।
तान्सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् ॥

अव्रतान् अनुपनीतान् । कालेऽनुपनीतानित्यर्थ इत्यन्ये । 'अत ऊर्ध्वं त्रयोऽप्येते' इत्युक्तस्यापि व्रात्यलक्षणस्य पुनः प्रतिलोमप्रकरणे कथनं प्रतिलोमपुत्रतुल्यत्वेन तद्वदेव पुत्रकार्याक्षमत्वप्रतिपादनार्थमिति व्याख्यातारः । एषामत्र कथने बीजं मनुनाऽप्युक्तम्—

व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥

इति । व्यभिचारोऽन्योन्यस्त्रीगमनमविवाह्यसगोत्रादिविवाहोऽवेद्यावेदनं स्वकर्मणामुपनयनादीनां त्यागः । एवञ्च व्रात्योत्पन्नत्वमेव व्रात्योत्पन्नस्य सङ्करत्वबीजं न व्यभिचार इति बोध्यमिति व्याख्यातारः ।

व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पधः शैखर एव च ॥

अत्र सवर्णास्वित्यनुवर्तते । 'पापात्मा' इत्यनेन निन्द्यतोक्ता । चत्वार्येकस्यैव नामानीति केचित् । अन्ये तु भूर्जकण्टकाद्ब्राह्मण्यामावन्त्यस्तस्मात्तस्यां वाटधानस्तस्मात्तस्यां पुष्पशेखर इत्यर्थः । एवमग्रेऽपीति व्याचक्षते—

झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥
वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च ।
कारूषश्च विजन्मा च मैत्रः सात्वत एव च ॥

इत्यादिना प्रतिलोमानुक्त्वा मनुराह—

सजातिजानन्तरजाः षट् सुता द्विजधर्मिणः ।
शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥

इति। त्रिभिर्वर्णैः समानजातीयासु जातास्त्रय', अनन्तरजास्त्रय', ब्राह्मणेनाऽव्रात्येन क्षत्रियावैश्ययो', क्षत्रियेणाऽव्रात्येन वैश्यायामे' वं षट् पुत्रा। द्विजधर्मिण उपनेयास्तद्भिन्नाः सर्वे उक्ता अनुलोमा प्रतिलोमाश्चाऽपध्वंसजास्ते सर्वे शूद्रधर्माणो नैषामुपनयनमस्तीत्यर्थ इति मेधातिथिकुल्लूकभट्टौ। अपध्वंसजाः शूद्रा, विवाहन्यायोपेतत्वाच्छूद्राविवाहमुपक्रम्य–

नैतन्मम मतं यस्मात्तत्राऽऽत्मा जायते स्वयम्।

इति याज्ञवल्क्योक्ते। अपध्वंसो व्यभिचार स आनुलोम्येन प्रातिलोम्येन च सवर्णायामन्यपुरुषोत्पन्नस्य प्राग्लिखितदेवल-वचनेन शूद्रसधर्मत्वोक्ते। ब्राह्मणाद्ब्राह्मण्यां जातकुण्डादेरुपनयन-मात्र केचिदिच्छन्ति। तथा मूर्द्धावसिक्तादीननुलोमप्रतिलोमान् प्रक्रम्य ब्रह्मपुराणे उक्त–'एते मातृसधर्माणः' इति। वसिष्ठोऽपि ता नेव प्रक्रम्य 'सर्वे बाह्याः सद्धर्मबहिष्कृता अन्यत्र प्राणिसंरक्षणादिति शिक्षा' इत्याह। अत्र सद्धर्मोऽनुलोमेषु पितृधर्म, प्रतिलोमेषु मातृ धर्म इति तथाख्यातार। किञ्च वसिष्ठेन–'क्षत्रियवैश्यानुलोमानन्तरजातो रथकार इत्येके, तस्येज्याध्ययनाधानोपनयनसंस्काराश्चाऽप्रति षिद्धाः रथसूत्रवास्तुविद्याध्ययनवृत्तिता च' इति राजसदृशजस्य रथकारस्यैवोपनयनमुक्तम्। तथा मिताक्षरायां शङ्ख–'क्षत्रियवैश्या नुलोमानन्तरोत्पन्नजो रथकारस्तस्याऽध्ययनेज्याधानोपनयनसंस्का-रक्रियाः' इति।

माहिष्येण करण्यान्तु रथकारः प्रजायते।

इति याज्ञवल्क्योक्तोऽयम्। वैश्याच्छूद्रायामुत्पन्नस्य करणस्याऽपि रथकारपदवाच्यता। 'वैश्याच्छूद्रायां रथकारः' इति बौधायनादिति मदनपारिजातकल्पतरुकारौ शूद्रधर्मोत्पलद्योतन्यां स्मृतिकौमुद्यां स्पष्टम्। पूर्वोक्ते वसिष्ठेऽपि तथैव स्पष्ट। तथा व्रात्यवैश्योत्पन्नः सुधन्वाचा-

र्याख्योऽपि रथकार इति जैमिनि । तथा हि वचनाद्रथकारस्याधाने सर्वशेषत्वात् 'वर्षासु रथकार आदधीत' इति वाक्ये त्रैवर्णिकस्य रथकारस्याधानं प्रचनात्—अस्मादेव वाक्यात् । अस्य रथकाराधानवाक्यस्य सर्वत्रैवर्णिकाधानविधायकवाक्यशेषे पठितत्वात् । त्रैवर्णिकानामुक्तस्य कालस्य बाधे मानाभावेनेदं वचनमत्रैवर्णिकपरमिति तदर्थं इति तद्भाष्यम् । ते च के तत्राह सूत्रकार—

सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेते ।

इति । 'सौधन्वना ऋभव.' इति रथकाराधानमन्त्रेऋभुपदवाच्यानां रथकाराणां सौधन्वना इत्यनेन सामानाधिकरण्याच्चेऽत्र रथकाराः सुधन्वनामाचार्याः सौधन्वनाः ।

ननु व्रात्यवैश्याद्युत्पन्नस्य सुधन्वाचार्यस्य वैश्यत्वमेवेति तत्राह हीनत्वात्-वैश्येभ्योऽपकृष्टत्वादित्यर्थः । अत एव मनुना सङ्करेपूक्ताः । शूद्रेभ्यस्तूत्कृष्टास्ते इति शूद्रत्वप्रयुक्तो निषेधो नाऽस्मिन्निति शबरस्वामी । इदञ्चाऽऽधानं स्वसन्त्रविश्वजिद्वत्कल्पस्वर्गरूपफलं, न तु यज्ञादिफलकमुपनयनाभावादिति । तत्र रत्नकृद्वचनादाधानमिति वदता जैमिनिनापीद ध्वनितम् । एवञ्च व्रात्यवैश्योत्पन्नस्य नोपयनसंस्कार इति जैमिनिसम्मतम् । यद्यप्यस्य वृत्तिर्वैसिष्ठेन, ब्रह्मपुराणे व्यासेन च प्रतिमादिस्थाने पूजोक्ता, तथाऽपि जैमिनिप्रामाण्यात् रथकरणवृत्तिरप्यस्य बोध्या । अत एव शबरस्वामिना 'सौधन्वना ऋभव.' इत्यत्र ऋभुपदस्य रथकारवाचकत्वेनेति 'नयन्ति ऋभवो यथा' इति मन्त्र प्रमाणत्वेन दर्शित । 'नेमि नयन्ति' इत्यस्य काष्ठत्रययोजनेन नेमिं निष्पादयन्तीत्यर्थः । एवञ्च योगरूढस्तत्र रथकारशब्दः । अन्ये तु शुद्धरूढमेवेच्छन्ति । एवञ्च रूढेर्वास्तवत्वादस्यैव ग्रहणं न्याय्यमिति तदाशय । एव क्षत्रियब्राह्मणोत्पन्नोऽप्यसंस्कार्यः ।

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च॥
पौण्ड्रकाश्चौड्रद्रुमिडाः काम्बोजा यवनाः शकाः।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः॥

इत्यत्र मनुना वृषलत्वेन भणितद्रुमिडखशसंज्ञाया व्रात्यक्षत्रियजस्य व्यवहारात् क्रियालोपेनो वृषलत्वकथनाच्च। न च क्षत्रियाणां कलौ संन्यासनिषेधात्तत्सत्तानुमानमुपनयनाद्यनुमानञ्चेति वाच्यम्।

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
न तु बाहूरुजातानामयं धर्मो विधीयते॥

इत्येव स्मरणात्। विष्णोर्लिङ्गं संन्यासः, तन्निषेधस्य सपुष्पायमाणत्वाच्च क्वापि युगे क्षत्रियाणां संन्यासास्मरणाच्च। आपस्तम्बेन तु 'वसन्तो ब्राह्मणस्य, ग्रीष्मो राजन्यस्य, हेमन्तो वा शरद्वैश्यस्य, वर्षा रथकारस्य, ये त्रयो वर्णानामेतत्कर्म कुर्युस्तेषामेष कालः' इत्याधानप्रकरणे उक्तम्। त्रयाणां वर्णानामन्तर्भूता गुणेच्छया कुर्वन्ति रथकरणं रथकारा इति तद्व्याख्यातारः। 'ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपकुष्टाः' इति आश्वलायनसूत्रव्याख्यायामुपकुष्टो रथकारो वैश्यस्तक्षकर्मोपजीवी उपकुष्ट इत्युच्यते इति तद्व्याख्यातारः। न च त्रैवर्णिकस्य शिल्पोपजीवनप्रतिषेधात्तस्य रथकारत्वासम्भव इति वाच्यं, 'गुणार्थेन' इति सूत्रेण जैमिनिना समाहितत्वात्। न च तेषामेतद्विधिविषयत्वे रथकारत्वे निमित्ते वर्षाविधानं वाक्येन कार्यं मम तु यस्याप्राप्तंतस्याधानविधानं श्रुत्येति वसन्तादिवाक्यैरैकरूप्यमिति वाच्यम्, आपस्तम्बवचनेन तस्य नैमित्तिकत्वबोधनेनाप्रवृत्तेः। न हि सर्वेषामैकरूप्यनियमः सर्वत्राऽस्ति। बौधायन उपनयनमपि वर्षासु रथकारस्याह। अनेकऋषिप्रामाण्यात्सर्वत्र श्रुतेस्तात्पर्यमिति तत्त्वम्। एतेन माहिष्यात्करण्यामुत्पन्नस्य रथकारस्य नाधानाधिकार इति तन्त्ररत्नोक्तमपास्तं प्रागुक्तवसिष्ठग्रहविरोधात्।

नन्वस्त्वग्रणां शूद्रत्वं तथापि तेषां कलौ कर्माधिकारोऽस्त्येव। तथा हि मात्स्ये—

ब्राह्मणाः शूद्रयोनिस्थाः शूद्रा वै मन्त्रयोनयः।

इत्युक्तम्। अभिलिप्सवो धनमिति शेषः। वेदार्थमुपस्थास्यन्ति उपस्थापयिष्यन्ति बोधयिष्यन्ति। शूद्रयोनिस्थाः तत्तुल्या एव। मन्त्रयोनय इति मन्त्रयोनिब्राह्मणवदुपनयनादिसंस्कारवन्त इत्यर्थः। तथा कौर्मे—

अध्यापयन्ति वै वेदान् शूद्रान्धर्मार्थकोविदान्।

इति। लिङ्गमात्स्ययोः—

अधीयते तदा वेदान् शूद्रा धर्मार्थकोविदाः।
यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः॥

इति वाक्यजालेन तदधिकारबोधनादिति चेन्न—

तस्मादायुर्बलं रूपं कालिं प्राप्य प्रहीयते।

इति कलिनिन्दावाक्यशेषेणैतद्वाक्यानां कलावपि शूद्रान् प्रत्येतन्निषिद्धमित्यर्थ एव तात्पर्यात्। किञ्च—

इति। द्विजबन्धवो व्रात्या द्विजेभ्यः शूद्रायामुत्पन्नाश्च। ब्रह्मपुराणेऽपि-

विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा।

इति मात्रपदेन स्मृतिषु शूद्रं प्रति विहितगर्भाधाननामकरणनिष्क्रमणकर्णवेधान्नप्राशनविवाहातिरिक्तसंस्कारनिवृत्तेः।

ननु वनपर्वणि युधिष्ठिराऽजगरसंवादे 'ये यजामहे' इति श्रुत्या ब्राह्मणत्वे सन्देहमुपन्यस्य शीलेन निर्णय इत्युक्तम्। तथाच्योतृषिश्च ब्राह्मणत्वसन्देहे कथं यज्ञो नानिष्टफल इत्याशङ्क्य यजमानस्य होत्राऽध्वर्युणा च प्रवरवरणेनाऽब्राह्मणस्यापि यजमानस्य ब्राह्मण्यं सम्पाद्यत इति व्याख्यातम्। तथेदानीमक्षत्रियाणामपि क्षत्रियत्वप्राप्तिरस्त्विति चेन्न, ब्राह्मणत्वेन निश्चिते तच्छ्रौततात्पर्याभावात्। तथा हि सर्प उवाच-

ब्राह्मणः को भवेद्राजन्! वेद्यं किञ्च युधिष्ठिर!।

वेद्यं-ज्ञानमात्रप्राप्यम्। युधिष्ठिर उवाच-

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।
दृश्यते यत्र नागेन्द्र! स ब्राह्मण इति स्मृतः॥

सत्यं यथार्थमहिंस्रं वचनम्। आनृशंस्यमनैष्ठुर्यम्। तपः स्वधर्माचरणम्। घृणा कृपा।

वेद्यं सर्प! परं ब्रह्म निर्दुःखमसुखञ्च यत्।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम्॥

असुखत्वं कार्यसुखानाश्रयत्वात्। यत्र ब्रह्मणि न शोचन्ति पुनः संसारं न प्राप्नुवन्ति। सर्प उवाच-

चातुर्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्म चैव हि।
शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर!।
वेद्यं यच्चात्र निर्दुःखमसुखञ्च नराधिप!॥
ताभ्यां हीनं पदञ्चान्यन्न तदस्तीति लक्षये॥

चातुर्वर्ण्यं चतुर्वर्णहितं सत्यं प्रमाणञ्च ब्रह्म धर्मव्यवस्थापकं वेद-स्मृत्याचारादि। सत्यादीनां शूद्रेऽपि दर्शनात्तत्राऽतिव्याप्तिर्ब्राह्मणलक्षणस्येति भावः। एवं ब्रह्मापि नास्तीति प्रश्नः। युधिष्ठिर उवाच—

शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।
नैव शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥
यत्रैतल्लक्ष्यते सर्प! वृत्तं स ब्राह्मणः स्मृतः।
यत्रैतन्न भवेत्सर्प! तं शूद्रमिति निर्दिशेत्॥

शूद्रलक्ष्म कामादिकं, ब्राह्मणलक्ष्म शमादिकं, तत्क्रमेण ब्राह्मणे शूद्रे च नास्तीत्यर्थः। शूद्रोऽपि शूद्रत्वेन निश्चितोऽपि शमाद्युपेतो ब्राह्मणसदृशो मान्यः। ब्राह्मणोपि कामादियुतः शूद्रतुल्यतयाऽनादर्तव्यो न तु मुख्ये शूद्रे ब्राह्मणत्वादि वक्तुं शक्यमनेकश्रुतिस्मृति-विरोधात्। पूर्वपक्षिणा मुख्यतत्त्वापत्तौ शङ्कितायाङ्गौणतत्पदप्रयोगे इष्टापत्तिः सिद्धान्तिनः, अन्यथा तादृशवृत्तवतः शूद्रस्य वेदाध्ययनापत्तेः।

यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च।

सुखदुःखहीनन्नास्तीत्युक्तमित्यर्थः।

एवमेतन्मतं सर्प! ताभ्यां हीनन्न विद्यते।

कर्म प्राप्यमिति शेषः। वेद्यन्त्वस्त्येवेत्याह—

यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता।
एवं वै सुखदुःखाभ्यां हीनमास्ति पदं क्वचित्॥
एषा मम मतिस्सर्प! यथा वा मन्यते भवान्।

यद्यपि तत्कर्म प्राप्यन्न तथापि तन्नास्तीति नेति काकुः, ज्ञानप्राप्यस्य तस्य श्रुतिसिद्धत्वादिति भावः।

सर्प उवाच—

यदि ते वृत्ततो राजन्! ब्राह्मणः प्रसमीक्षितः।
वृथा जातिस्तदा राजन्! वृत्तं यावन्न विद्यते॥

युधिष्ठिर उवाच—

जातिरत्र महासर्प ! मनुष्यत्वे महामते ! ।
संस्कारात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणञ्च समं नृणाम् ॥

वागादिवन्मैथुनस्यापि साधारण्याज्जातिर्दुर्ज्ञेयेति भावः । तत्र श्रुतिं प्रमाणयति । इदमपि प्रमाणञ्च 'ये यजामहे' इत्यपि । ये वयं स्मो ब्राह्मणा अन्ये वा हातृध्वर्युयजमाना वषट्कारहविः प्रक्षेपादेर्हवि त्यागकर्तारस्ते यजामहे इत्यर्थकेन 'ये यजामहे' इत्यनेन ब्राह्मण्येनानवधारणं दर्शयति । श्रुत्यन्तरमपि-'न चैतद्विद्मो ब्राह्मणाः स्मो वयं मब्राह्मणा वा' इति मन्त्रलिङ्गमपि 'य एवास्मि स सन्यजे' इति । एवंविधा विनयेन सत्योक्तिरेव शीलरूपा वेदा ब्राह्मण्यनिश्चायिकेत्याह—

तस्माच्छील प्रधानेष्टं विदुर्य तत्त्वदर्शिनः ।

ते शीलं प्रधानञ्च तदिष्टञ्चेत्यर्थः, जात्यनुमापकत्वादिति भावः । स्पष्टञ्चायमर्थश्छान्दोग्ये जाबालोपाख्याने ।

तन्वेव ब्राह्मण्यसन्देहे कथं यज्ञादौ प्रवृत्तिरिति चेन्न निश्चयस्यैव प्रतिबन्धकत्वात् । शीलादिना ब्राह्मण्यमैत्कण्ठ्येन सम्भाव्यमानत्वव्यभिचारदुष्टमातापितृजन्यत्वप्रयुक्ताब्राह्मण्यस्यानुत्कटसन्देहविषयस्य निवृत्तये 'अग्निर्होता' इति मन्त्रेण गौतमवदपास्यैव(?)दङ्गिरोवद्ब्राह्मणवदिति यजमानादेः प्रवरवरणङ्कुर्वन्ति । तथा च श्रुतिः—'अग्निर्दैवो होता' इत्याह । 'य एव देवानामवृणीत ततो देवा अभवन् परासुराः यस्यैवं विदुषः प्रवरं वृणते भवत्यात्मनापरास्य भ्रातृव्यो भवति' इति । न त्वनेनाब्राह्मणत्वेन निश्चितस्य ब्राह्मणत्वं भवति । अन्यथा विश्वामित्रस्य ब्राह्मण्यलाभाय गुरुतरतपःप्रयासवैयर्थ्यापत्तिः । अब्राह्मण्येन निश्चितस्य सङ्कुरजस्यात्युग्रेणापि तपसा ब्राह्मण्याप्राप्तिर्मतङ्गोपाख्याने भारते स्पष्टा । अत एव द्विजातकुण्डगोलकादावसंस्कार्या-

रिति मिताक्षरा। श्राद्धे कुण्डादिनिषेधस्तु ब्राह्मण्यां ब्राह्मणाज्जात इति भ्रमप्राप्तस्येत्यपि तेनैवोक्तम्। गृहस्थरत्नाकरकृतापि तथैवोक्त्वा—

केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ।

इति मतान्तरमुपन्यस्य उपनयनपूर्वं सन्ध्यावन्दनमात्रमुक्तम्। तद्रीत्या प्रवरवरणेन तस्य यज्ञादेरप्यापत्तिरीति बोध्यम्। उक्तमुपसंहरति—

यत्रेदानीं महासर्प! संस्कृतं वृत्तमिष्यते।

तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम!॥

इति। संस्कृतवृत्तं वैदिकसंस्कारपूर्वकं सत्यादिवचनरूपमतः सत्यादियुतस्यापि शूद्रस्य न ब्राह्मणत्वम्। ब्राह्मणत्वेन सम्भाविते च विप्रत्वप्रापकमविशिष्टं तत्तन्निर्णायकमतस्तद्विशिष्ट एव मे ब्राह्मणो मत इति भाव इति। न तेनाऽक्षत्रियाणां क्षत्रियत्वप्राप्तिः।

कर्मभिः शुचिभिर्देवि! शुद्धात्मा विजितेन्द्रियः।

शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माऽब्रवीत्स्वयम्॥

स्वभावः कर्म च शुभं यत्र शूद्रेऽधितिष्ठति।

विशुद्धः स द्विजातिभ्यो विज्ञेय इति मे मतिः॥

तयोर्विनापि संस्कारो न श्रुतिर्न च सङ्गतिः।

कारणानि द्विजत्वस्य वृत्तमेव तु कारणम्॥

इति ब्रह्मोक्ते। वृत्तसहितान्येवैतानि कारणं न तु केवलानीत्यर्थः।

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम्।

यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्॥

इति भागवतस्थमपि तद्वन्मान्य इत्यर्थकं 'संस्कारा अविच्छिन्ना स द्विजोऽजो जगाद यम्' इति तत्रैवोक्ते। यत्र यस्मिन्संस्कारा अविच्छिन्नाः स द्विजः, यमेवम्भूतमजो ब्रह्मा द्विज इति जगादेति तदर्थ इति दिक्।

नन्वेवमपि भागवते दशमे चत्वारिंशाध्यायेऽक्रूरस्तुतौ—

म्लेच्छप्रायक्षत्रहन्त्रे नमस्ते कल्किरूपिणे।

इत्यनेन कलिकालेऽपि क्षत्रियसत्त्वोक्तेः कथमिदानीं तदभाव इति चेन्न,

पूर्वोक्तविष्णुपुराणैकवाक्यतया तत्रत्यक्षत्रपदस्य क्षत्रसदृशपरत्वात् । म्लेच्छप्रायेत्यस्य म्लेच्छवत् पापाचारेत्यर्थः। 'प्रायः पापं विजानीयात्' इति स्मृते । प्रायःशब्दोऽदन्तः 'प्रायस्य चित्तिचित्तयोः' इति कात्यायनवार्तिके स्पष्टः । यद्वा क्षत्रसदृशास्तेऽपि म्लेच्छबहुला अन्ये त्वल्पा एव तद्भन्ने इत्यर्थः । अत एव द्वादशे कल्क्यवतारवर्णने—

नृपलिङ्गच्छदो दस्यून्कोटिशो निहनिष्यति ।

इत्युक्तम् ।

असंस्कृताः क्रियाहीना रजसा तमसा वृताः ।
प्रजास्ते भक्षयिष्यन्ति म्लेच्छाः राजन्यरूपिणः ॥

इति च तत्रोक्तम् । एकादशस्कन्धेऽपि—

भूमेर्भरावतरणाय यदुष्वजन्मा
जातः करिष्यति सुरैरपि दुष्कराणि ।
वादैर्विमोहयति यज्ञकृतोऽतदर्हान्
शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते ॥

इति । अतदर्हान् दैत्यान् अन्ते कलेरन्ते कल्किरूपेण । यथा नृपलिङ्गच्छद इत्यस्य राजवेषच्छन्नानित्यर्थः । तथापि विष्णुपुराणे चन्द्रसूर्यवंशानुक्त्वा—

एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ।
कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥

इत्युक्तम् । नामैव लिङ्गं ज्ञापकं येषां चन्द्रसूर्यवंश्यानां क्षत्रियाणां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वेत्यर्थ इति श्रीधरस्वामी हरिवंशेऽपि भविष्ये—

न क्षत्राणि नियोक्ष्यन्ति विकर्मस्था द्विजातयः ।
चौरप्रायाश्च राजानो युगान्ते पर्युपस्थिते ॥

इति । युगान्ते कलौ । क्षत्राणि क्षत्रियाः । न नियोक्ष्यन्ति लोकान्धर्म इति शेषः । राज्याधिकारिणां तेषामभावादिति भाव. । अत एव

द्विजातयो ब्राह्मणाद्या विकर्मस्था राजानो योगमात्रेण भूपालाश्चौर प्रायाः स्वयमेव पालकाः स्वयमेवापहर्तार इत्यर्थ.। कश्चिदेव तथेत्यतः प्राय इत्युक्तम्। यत्तु यत. स्वय विकर्मस्था अतो ब्राह्मणा' क्षत्रियान् धर्मे न नियोक्ष्यन्तीत्यन्वय इति तन्न विष्णुपुराणविरोधात् । तथा—

वैश्याचाराश्च राजन्या धनधान्योपजीविन'।

इति । एतच्छेषस्थभविष्यन्तीत्यस्य स्थास्यन्तीत्यर्थः। यथा सम्प्रति ब्रह्मक्षत्रियत्वेन प्रसिद्धास्तथाचारा दृश्यन्ते वाहीकाख्ये मद्रदेशे, ते परशुरामेण क्षत्रियधर्मं त्याजिता इति पुराणेषु प्रसिद्धम्। तथा–

अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविन.।

शूद्राश्च ब्राह्मणाचारा भविष्यन्ति युगक्षये ॥

इति । युगक्षये कलौ । एतच्च स्पष्टं क्षत्रियाणां राज्याभावं बोधयति । तस्मात्कलौ राज्यपदस्थानां क्षत्रियपदव्यवहार्याणामुपनयनधध्ययनयज्ञाद्यनधिकारः सिद्ध, तदधिकारयोग्यमुख्यक्षत्रियत्वाभावादित्यल पल्लवितेन ॥

अथ त्रिपुरुषात्पूर्वमप्यनुपनीतब्राह्मणकुलजस्योपनयनं भवति न वेति सन्देहे च निर्णयाय व्रात्यताप्रायश्चित्तनिर्णय क्रियते, तदर्थमुपनयनकालनिर्णय'। तत्र 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति श्रुति. । आश्वलायनोऽपि—'अष्टमे वर्षे ब्राह्मणमुपनयेत् गर्भाष्टमे वा, एकादशे क्षत्रिय, द्वादशे वैश्यमाषोडशाद्ब्राह्मणस्यानतीतः काल', आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैतानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयु ' इति । अत्रायमुपनयननिषेधो चीर्णप्रायश्चित्तानां केश्चिदतिक्रान्तनिषेधैरुपनयनेऽपि नाध्यापन केनचिदतिक्रान्तनिषेधेनाध्यापनेऽपि न यागादीत्यर्थ । अयञ्चोपनयननिषेधोऽष्टवर्षान्तमुख्यकालषोडशवर्षान्तगौणकालोभयाभावेन प्राप्तस्यैवोपनयनाभावस्याऽनुवाद'। यथा 'अशूद्राणामदुष्टकर्मणामुपनयनम्' इत्यापस्तम्बसूत्रे शूद्रप्रतिषे-

धो नित्यप्राप्तानुवाद । दुष्टकर्मप्रतिषेधार्थन्तु सूत्रम् । त्रैवर्णिकस्यैवो पनयनविधानेन शूद्रस्य तदप्राप्तेरिति हरदत्तेनोक्तम् । तदनुवादफल न्तु ब्राह्मणादिभ्य शूद्रायामुत्पन्नस्य ब्राह्मणादिजन्यत्वेऽप्युपनयना भावबोधनम् । बौधायनोऽपि—'अथातो गर्भाष्टमेषु वर्षेषु ब्राह्मणमुपन यीत, गर्भैकादशेषु राजन्य,' गर्भद्वादशेषु वैश्यमाषोडशाद्ब्राह्मणस्य नात्यय इत्येवमेवेतरयोर्द्वाविंशतिश्चतुर्विंशतिश्चाथाऽपि काम्यानि भवन्ति, सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्काम नवमे तेजस्काम, दशमेऽन्नाद्यकाममेकादशे इन्द्रियकाम, द्वादशे पशुकाम, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्य, शरदि वैश्य, वर्षासु रथकारं सर्वानेव वा वसन्ते' इति । रथकार पूर्वमेव निरूपितः । आपस्तम्बो ऽपि—'गृह्ये गर्भाष्टमेषु ब्राह्मणानुपनयीत, गर्भैकादशेषु क्षत्रिय, गर्भ द्वादशेषु वैश्य वसन्तो ग्रीष्म शरदृतवो वर्णानुपूर्व्येण' इति । गर्भाष्टमेषु गर्भषष्ठसप्तमाष्टमेषु विप्रस्य क्षत्रस्य नवमदशमैकादशेषु वैश्यस्य दशमतस्त्रिष्विति तदर्थ इति सुदर्शन । धर्मप्रश्ने आपस्तम्ब – 'आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्य स्य' इति । आङभिविधौ, मर्यादायामिति मिताक्षरा ।

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।
समतिक्रान्तकालाश्च पतिता सर्व एव ते ॥
सशिखं वपन कृत्वा व्रतङ्कुर्यात्समाहित ।
एकविंशतिरात्रञ्च पिबेत्प्रसृतियावकम् ॥
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा ।
ततो यावकशुद्धस्य तस्योपनयन स्मृतम् ॥

इति । यमस्मृतौ पञ्चदशोर्ध्व पतितसावित्रीकत्वोक्तेरिति तदाश य । अभिविधिपक्षेऽपि षोडशग्रहणद्वर्भत इति कैश्चिद्विरोध । अ त्यययोऽतिक्रम स च प्रकरणादुपनयनस्येति गम्यते । तदभावो ऽनात्यय । आर्षो दीर्घ ,आङो वा दीर्घ । अधिकमप्याह–'यथा व्रतेषु

*समर्थः स्याद्यानि वक्ष्याम*.'। वक्ष्यमाणव्रतेषु यथा समर्थः स्यात्तावत्कालं प्रतीक्षा कार्येति तदर्थः। एवञ्च पूर्वमेव सामर्थ्येऽप्यपाति-क्रमेऽपि वक्ष्यमाणं प्रायश्चित्तं भवत्येव। एवं षोडशादिभ्य ऊर्ध्वं कियत्कालमसमर्थानां यदा सामर्थ्यं तदा चित्त्वैव प्रायश्चित्तमुपनयनम्। सामर्थ्योत्तरमपि किञ्चित्कालातिक्रमे प्रायश्चित्तं पूर्वमेव।

तत्प्रायश्चित्तमाह—'अतिक्रान्ते सावित्र्या ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्'। यस्य यः सावित्र्याः कालस्तदतिक्रमे त्र्यवयवविद्याध्येतृसम्बन्धि ब्रह्मचर्यमभिसेवाध्ययनगुरुशुश्रूषातिरिक्तं सर्वं, ब्रह्मचारिधर्मं चरेत्। ऋतुमिति कालविधानं, तेन ऋत्वारम्भे प्रायश्चित्तारम्भः। अन्ये तु वेदब्रह्मचर्यमित्येव सिद्धे त्रैविद्यकमित्युक्त्या प्रतिवेदं ऋतुमिति ऋतुत्रयन्तदित्याह॥

अथोपनयम्। एवं चरितव्रत उपनेतव्यः। ततः संवत्सरमुदकोपस्पर्शनम्। तत उपनयनोत्तरं संवत्सरस्नानम्। शक्तस्य विषयणमशक्तस्य यथाशक्ति। तच्च वक्ष्यमाणपावमान्यादिभिरिति हरदत्तः। तूष्णीमित्यन्ये।

अथाध्याप्य इति। अत्रैव विषये वसिष्ठः आद्दोद्दालकमतम्। 'पतितसावित्रीक *उद्दालकव्रतञ्चरेत् द्वौ मासौ यावकेन वर्तयेत् मासं* पयसाऽऽमिक्षयाऽर्धमासं, घृतेन षड्रात्रम्, अयाचितेन त्रिरात्रम्, अब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथङ्गच्छेत् व्रात्यस्तोमेन वा यजेत'-इति। उपवसनमश्वमेधावभृथमिति पाठान्तरम्। यमश्च —

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

इति। मनुरपि—

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते।

आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥

इति। व्रात्यसंज्ञाप्रयोजनञ्च व्रात्यानां याजनङ्कृत्वा त्रीन्कृच्छ्रा-नाचरेदिति। त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपीति मनुया-ज्ञवल्क्याद्युक्तप्रायश्चित्तप्राप्तिरिति तद्व्याख्यातारः। तथा शातात-पोऽपि—'पतितसावित्रीकाणोपनयेन्नाध्यापयेन्न यः पतानुपनय-येदध्यापयेत् याजयेद्वा स उद्दालकव्रतञ्चरेत्' इति। ए-वमुद्दालकव्रतञ्चामरुते। इति मिताक्षरा। अत्र मुख्योपनेतुरभावेन व्रतसमर्थस्याऽप्युपनयनकालातिक्रमे मासं पञ्चगव्याशनं, चान्द्रायणं, मासं पयोव्रतं वा पराकं वा अनापद्यतिक्रमे उपन-यीत केपूक्तं मानवं त्रैमासिकं पञ्चदशतः षोडशतो वा ष-ष्ठादूर्ध्वं कियतः कालस्यातिक्रमे उद्दालकव्रतव्रात्यस्तोमौ बोध्या-विति निबन्धकृत। यत्तु शङ्खेन गोदानसहितं चान्द्रायणमुक्तन्तदुद्दाल-कव्रतसमानविषयम्। उद्दालकव्रतशङ्खोक्तयोः सपाददशधेनवः। वैश-विंशत्यादिना कालातिपाते सशिखं वपनङ्कृत्वेत्यादियमोक्तं द्रष्टव्यम्। द्वात्रिंशत्यादिना कालातिपाते चव द्विगुणं शङ्खोक्तं वसिष्ठोक्तं वा। कथ-मप्युपनेतुरभावेन कालातिपाते मनुविष्णू—

येषां द्विजानां गायत्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत्॥

इति। पित्रादीनामप्यनुपेतत्वे आह्राऽऽपस्तम्ब—'अथ यस्य पिता पितामह इत्यनुपेतौ स्यातान्ते ब्रह्महसंस्तुताः'। यस्य माणवकस्य, जा तायेकपचनम्। येषां माणवकानां पिता पितामह इत्यनुपेतौ स्य-यश्च ते तथाविधा माणवका ब्रह्महसंस्तुता, ब्रह्महण इत्येवङ्गीतिताः। अरिमंस्तच्छास्तद्धर्मप्राप्त्यर्थः। ततश्च यथा ब्रह्महसहिते गृहे नाध्येय-पमेवं तैरपि सम्भवोधसम्प्राप्त्यर्थपस्त्वष्द्वरेत् इति हरदत्तः। एषश्च ब्रह्म-

हत्याप्रायश्चित्तेन समुच्चयो वक्ष्यमाणस्येति लभ्यते। अत्र व्याख्याने स्वयञ्चेत्यत्र यथाकालमनुपेत इति शेषः। 'यस्य प्रपितामहादि' इति सूत्रे हरदत्तेन तथाऽव्याख्यानात्। 'तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्'। अभ्यागमनं आभिमुख्येन गमनम्। मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत्। रक्षायाः सर्वतः प्रतिग्राह्यत्वे पितृतस्तत्प्रतिग्रहे निषेधः। दुष्कुलकारिणामभ्युद्यतं भोजनं यद्यप्यत्याज्यन्तथाप्यस्य तादृशमपि त्याज्यम्। दुष्कुलादपि स्त्रीरत्नस्य ग्राह्यत्वं यद्यपि, तथाप्येतदीयकन्याया अपि विवाहो वर्ज्यः। तेषामिच्छतां प्रायश्चित्तम्। इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तम्।

अत्र वदन्ति आद्येऽतिक्रमे प्रायश्चित्तपदमनुक्त्वाऽत्र प्रायश्चित्तमित्युक्त्या ब्रह्मदपदस्य च पूर्वं प्रयोगात्तत्प्रायश्चित्तमित्यर्थः। अत एव तेषामिच्छतां ब्रह्मचर्यमिति नोक्तम्। एतदभिप्रायेणैव हरदत्तेनात्रेत्यस्तच्छब्दप्रयोगः प्रायश्चित्तप्राप्त्यर्थं इति व्याख्यातम्। ब्रह्मचर्यन्तु अधिकमिति। यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः। यथा प्रथमातिक्रमे ब्रह्मचर्यस्य ऋतुः काल एवमत्रातिक्रमे संवत्सर इत्यर्थः। अथ 'अथ यस्य' इति सूत्रे पितामह इत्यसमस्तोपादानात्पितृमात्रनुपनीतत्वे इदं पितामहस्यापि तत्त्वे द्विगुणमेतत्, द्विगुणब्रह्महत्याप्रायश्चित्तेन सह। अत्र संवत्सरं ब्रह्मचर्यमिति सूचितम्। एवञ्चात्र पितृमात्रस्याऽनुपनीतत्वे त्रिवत्सरमित्यादि योज्यमिति वदन्ति।

अथोपनयनम्। तत उदकोपस्पर्शनं स्पष्टम्। तत्र विशेषमाह—'प्रतिपुरुषं सङ्ख्याय संवत्सरान् यावतोऽनुपेताः स्युः'। यदि पितैवानुपेतस्तदा संवत्सरमेकं, यदि पितामहोऽपि तर्हि द्वौ, अथ स्वयमपि यथाकालमनुपेतस्ततः संवत्सरानिति हरदत्त। स्नाने मन्त्रा व्याहृतयः। पक्षान्तरेण मन्त्रान्तराण्यपि धर्मप्रदने द्रष्टव्यानि।

अथाध्याप्यः। स्पष्टम्। अत्र यस्येत्युपक्रमे एकवचनमन्तेऽध्यथाध्याप्य इति एकवचनम्। मध्ये तु ते ब्रह्महसंस्तुताश्तेषा-

मभ्यागमनमित्यादि बहुवचनं, तथोपक्रमोपसंहारानुसारेण एकस्यैव प्रायश्चित्तोपनयनाध्यापनानि न पित्रादेः। बहुवचनञ्च माणवकबहुत्वापेक्षम्। जातौ चैकवचनमिति हरदत्तः। युक्तश्चैतत्, संन्यासोत्तरं गार्हस्थ्यस्येव विवाहोत्तरं ब्रह्मचर्यस्याऽप्राप्त्या तत्प्रसङ्गाभावादिति निरूपयिष्यामः। मध्ये तेषामिति बहुवचनेन पित्रादिसङ्ग्रहभ्रमव्युदस्यर्थमादावन्ते चैकवचनमिति बोध्यम्। 'अथ यस्य प्रपितामहादिनानुस्मर्यं उपनयनं ते श्मशानसंस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्, तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यञ्चरेत्'।

अथोपनयनं, तत उदकोपस्पर्शनं पावमान्यादिभिरिति। प्रपितामहादि प्रपितामहमारभ्य पितामहः पिता स्वयञ्च यथाकालमनुपेतास्ते तथाविधा माणवकाः श्मशानसंस्तुताः यथा श्मशानस्य सर्वतः शम्याप्रासपर्यन्तमध्ययनन्तथा एषामपि सन्निधौ नाध्येयमित्यर्थः। स्नानं माणवकबहुत्वाभिप्रायेत्यादिभिरित्युक्त्या प्रतिपुरुषं संख्याय संवत्सरानित्येतद्प्यत्र द्रष्टव्यमिति सूचयति। अथापि बहुवचनं माणवकबहुत्वाभिप्रायेणैकवचनं जातौ। अत्र 'अथ गृहमेधोपदेशनम्' इत्युक्त्या प्रतिपुरुषं संख्यायेत्युक्तेश्च। तेषामिति तत्पदेन यत्परम्पराभूतमाणवकग्रहणमेवोचितं, न तु पित्रादीनामित्याहुः।

'अथ गृहमेधोपदेशनम्'। गृहमेधो गृहशास्त्रे गृहस्थाश्रमश्च नाध्यापनं हरस्नस्य वेदस्य न गृह्यन्याणान्तु भवति गायत्रीजपोऽस्य सन्ध्याकाले आशौचिन इव दशवारं स्मरणमात्रम्। तथा च भवनाग—

अप्यः स्यादिह परलोकसिद्धिकामै—
मन्त्रोऽयं महिततरो द्विजैर्यथावत्।
मूढेषा मरणतयस्तृतीयवर्णा
सम्प्रोक्ता द्विजवचनेन तत्र भूयः॥

तव्यमित्यर्थः । तत्रत्रे तु न प्रायश्चित्तं नाप्युपनयनं मनूक्तेरिति बोध्यम्। एवमेवैषा स्मृतिः पराशरस्मृतिव्याख्याने माधवेन व्याख्याता। यत्तु 'यस्य प्रपितामहादि' इति सूत्रे प्रपितामहादीनामिति पाठकल्पनं, तत्त्वसङ्गतं हरदत्तमाधवादिविरोधात्, अध्येतृसम्प्रदायविरोधाच्च । यत्तु 'यस्य प्रपितामहादि' इति सूत्रं प्रपितामहादारभ्य पूर्वे उत्तरे चेति व्याचक्षते, इदमेवाभिप्रेत्य हरदत्तेन यस्य प्रपितामहस्य पितुरारभ्य नानुस्मर्यते उपनयनं तत्र प्रायश्चित्तं नोक्तमित्युक्त्वा धर्मशास्त्रैस्तु विहितमेवं पूर्वेष्वपीत्युक्तम्। तस्यार्थः धर्मशास्त्रैस्तच्छास्त्रनिबन्धकारैरुक्तरीत्या स्मृतिं व्याख्याय तत्रापि प्रायश्चित्तं विहितमिति वदन्ति तत्तुच्छम्, कात्यायनगृह्यस्मृतिविरोधात्। तत्र हि 'आषोडशाद्ब्राह्मणस्य' इत्यादि आश्वलायनवाक्यसमानार्थकं नैतैर्व्यवहारेरित्यन्तं पठितम्। व्यवहारपदार्थश्चाऽऽत्र तेषामभ्यागमनमित्यादिरापस्तम्बोक्त । ततः स आह कालातिक्रमे नियतवत्। अत्र हरिहरादय -गर्भाधानाद्युपनयनान्तानां कर्मणां कालातिक्रमे नियतवत्। नियतेषु श्रौतेषु विधिषु यद्विहितमनादिष्टविषयं मह व्याहृतिहोमाख्य सर्वप्रायश्चित्तं तद्वत्तथा तानि कार्याणीत्यर्थ इति । अन्ये तु षोडशोविरूपस्योक्तकालस्यैव कालातिक्रमे इत्यत्र ग्रहणमुचितम्। तत्र तु नेदृशं प्रायश्चित्तमुचितमत्यल्पत्वात् । तस्मान्नियतवदित्यस्य ब्रह्मचारिणो नियतं यद्वेदाध्ययनार्थं ब्रह्मचर्यन्तद्वत्सकृत्वोपनयनङ्कार्यमित्यर्थः । तद्वदित्यनेनाऽग्निसेवाऽध्ययनगुरुशुश्रूषात्यागो बोधितः, कालश्चास्यापस्तम्बोक्त एव । एवञ्चातिक्रान्ते सावित्र्या काले इत्यन्तसमानार्थमिदं, तन्त्रेणाऽस्यार्थरूपपरता चेत्याहुः।

अथाऽनेकपुरुषपतितसावित्रीकाविषये आपस्तम्बेन निषिद्धस्योपनयनस्य प्रतिप्रसव वदन् कियत्पर्यन्तं संस्कार्यतेत्याकांक्षायां नियममाह-'त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनञ्च'। त्रिपुरुषमिति "संख्या वंश्येन" इत्यव्ययीभावः। पतितसावित्री-

स्पर्शनम्, ततोऽध्याप्य इत्यादौ श्रुतिगृहमेधीयावध्याप्य . इत्येवार्थः स्यात् विशेषग्राहकमानाभावात् । तेन श्रौतस्मार्तसाधारण्येन तदादिन्यायाप्रवृत्तिः सूचिता भवेत् । तृतीयपर्याये उदकोपस्पर्शनस्याङ्गत्वे सति तदादिन्यायेन श्रौतस्मार्तधर्मप्रवृत्तौ 'अथ गृहमेधोपदेशनम्' इति वचसा स्मार्तधर्मानुग्रहे सत्यर्थात् श्रौतधर्मनिवृत्तिसम्भवेन पुनरपि नाध्यापनमिति विशदकथनमिदं सर्वत्राऽध्यापनपदं वेदाध्ययनपरमिति विभागसूचनाय। एवञ्च प्रथमद्वितीयपर्याययोरध्ययनपदं वेदाध्ययनपरामिति नियमयति । एवञ्च पूर्वपर्याययोस्तदादिन्यायेनोपनयनोत्तरमेव गृहमेधीयधर्मस्य प्रवृत्तिरस्ति न श्रौतस्येति गमितं भवति। एवञ्च प्रथमद्वितीयपर्याययोः सङ्स्नानभूताङ्गे सत्येव स्मार्तधर्मप्रवृत्तिः । प्रायश्चित्तरूपसंवत्सरादिस्नानोत्तरं श्रौतधर्मप्रवृत्तिरिति सूचनायैव तृतीये पर्वणि 'तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधोपदेशनं नाध्यापनम्' इति विरूपं वाक्यं विरचितम्। 'ततो यो निर्वर्तते' इति कथनमपि प्रथमद्वितीयपर्याययोरपि प्रायश्चित्तस्नानापूर्तावेवोपनीतपरमेतत् । कर्मठावस्थपुरुषपुत्रस्य तृतीयपर्यायगतपुत्रवत्पिअननुष्ठितप्रायश्चित्तमेव कर्तव्यमिति गमयति। एवं तृतीये पर्याये पित्रा समादरणीयं संवत्सरस्नानं पुत्रवाक्य एव पठितं न पितृवाक्ये, पठिते सति तु पूर्वपर्याययोरिव प्रायश्चित्तेन श्रौतेऽप्यधिकारसम्पत्तेः पूर्वपर्यायवत्केवलगृहमेधीयोपदेशनं 'अथ गृहमेधोपदेशनम्' इति कर्तुमशक्यमेव स्यात् । तदर्थं संवत्सरोदकोपस्पर्शनं पितृवाक्ये पठितुमुचितमपि पुत्रवाक्य एवातिदेशेनोक्तम्। यदि तु 'तत उदकोपस्पर्शनं पावमान्यादिभिः' इति वाक्यं पूर्वपर्याययोरिवाऽभ्यस्यमानं प्रायश्चित्तरूपवत्सरादिस्नानपरं भवति। एवञ्च स्नाने प्रायश्चित्ते पूर्णे सत्यपि स्नातुः श्रुतावनधिकार एव। केवलगृहमेधीय एवाधिकार इत्याशङ्क्याह 'त्रिपुरुषं पतितसावित्रीकाणामपत्ये' इति परम्परागतं स्मर्यमाणास्मर्य-

माणोपनयनसाधारण्येन चतुर्थादिपुरुषेषु व्रात्यस्तोमेन प्रायश्चित्तं विधाय 'काममधीयीरन्' इति वेदाध्ययनादिकथनमसङ्गतमेव भवेत्। भवन्मते प्रायश्चित्ते कृतेऽपि प्रपितामहाद्यस्मर्यमाणानुपनयनस्थले वेदाध्ययनानधिकारनिर्णयात् । एवं वसिष्ठोद्दालकव्रताश्वमेधावभृथव्रात्यस्तोमानां पितृपितामहप्रपितामहादिलक्षणानुपादानात् स्मर्यमाणास्मर्यमाणोपनयनावधिकसकलपुरुषसाधारण्येन प्रायश्चित्तत्वेन सिद्धत्वात् । तथैव याज्ञवल्क्यस्मृतावपि व्रात्यस्तोमस्य निखिलपुरुषसाधारण्येन प्रायश्चित्तत्वसिद्धेरापस्तम्बसूत्रे चतुर्थादिस्थले सर्वथा वेदाध्ययनानधिकारसूचनमसङ्गतमेव भवति ।

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ।

इत्यत्र व्रात्यस्तोमे सति श्रौतस्मार्तसकलकर्माधिकारसूचनात् व्रात्यस्तोमादिप्रायश्चित्तेनाऽकामैरपि भवद्भिः श्रौतेऽधिकार एष्टव्य एव भवेत् । एवञ्चाऽऽपस्तम्बसूत्रेऽतिगुरुतरद्वादशवर्षत्रैविद्यकं ब्रह्मचर्यं निर्दिश्यमानं श्रुत्यध्ययनानधिकारे निरर्थकमेव स्यात् । अन्यैस्तु तीये पर्याये एवङ्कुरूभूतप्रायश्चित्तानाम्नानात्स्मृत्यन्तरानुरोधेनाऽऽपस्तम्बसूत्रे विसंष्ठुलतापरिहाराय चतुर्थादिपुरुषस्थले श्रौताधिकारः पूर्वोक्तरीत्या स्वीकर्तव्य एव । अन्यैर्व्रात्यस्तोमेन व्रात्यतानिर्हरणेन वेदाध्ययनाधिकारकथनात्स्मृत्यन्तराविरोधेनैवाऽपरस्मृतिनियोजनस्य सति सम्भवे कर्तुमुचितत्वात् । 'तत उदकोपस्पर्शनं पावमान्यादिभिः' इत्यस्याभ्यासपरकालनिर्देशमन्तरा प्रायश्चित्तत्वनिर्णायकमानाभावात् प्रायश्चित्तपरतया नेतुमशक्यत्वाच्च । आपस्तम्बेनाऽपि उपनयनात्पूर्वमेव गुरुतरद्वादशवर्षब्रह्मचर्याम्नानात् उपनयनोत्तरं वेदाधिकृतये क्षुद्रमेव संवत्सरस्नानमभिमतं भवति । अत एव पितुः संवत्सरस्नानाभावे पुत्रेण तावद्वेदाध्ययनाधिकृतये संवत्सरस्नानं कर्तव्यमिति हृदयेन 'ततो यो निवर्तेत' इत्यादिवाक्यं प्रवर्तितं स-

क्तं भवति ॥

यस्तुतस्तु यत्तावत् यस्य प्रपितामहादि नानुस्मर्यते' इति तृतीयपर्याये उदकोपस्पर्शनलक्षणप्रायश्चित्तेऽपि श्रौताध्ययनम्न भवतीत्येतदर्थक नाध्यापनमित्येतदापस्तम्बसूत्रमित्युक्तं तत्तावद्व्रात्यस्तोमाद्यसमर्थपरं विज्ञेयम्। पारस्करेण 'त्रिपुरुष पतितसावित्रीकाणामपत्ये चतुर्थरूपे संस्कारो नाध्यापनञ्च' इत्यभिधाय 'तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्ति' इति कथितम्। तत्रेष्ट्वा संस्कारेप्सुर्भवेदित्यन्वय । एवञ्च चतुर्थप्रभृतिषु प्रायश्चित्तान्तरकरणे व्रात्यस्तोमाद्यकरणे स्मार्तकर्मानुष्ठानमात्रम्। कृते तु व्रात्यस्तोमादौ सर्वपातकनिवृत्तौ भवत्येव श्रौताध्ययनम्। अत एव याज्ञवल्क्येनापि—

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।

सावित्री पतिता व्रात्या—

इत्यभिधाय—

व्रात्यस्तोमादृते क्रतोः।

इत्यनेन व्रात्यस्तोमे कृते श्रौतस्मार्तसर्वधर्माधिकार इति स्पष्टीकृतम्। एवं च वशिष्ठेनापि 'व्रात्यस्तोमेन वा यजेत' इति अश्वमेधावभृथस्नानविकल्पितत्वेन सर्वव्रात्यतानिवर्त्तकत्वेन सर्वश्रौतस्मार्ताधिकारो निषद्धस्तस्मान्नाध्यापनमिति सकलस्मृतिवचनानुरोधेन व्रात्यस्तोमाद्यसमर्थपरमिति विज्ञेयम् । 'त्रिपुरुष पतितसावित्रीकाणामपत्ये' इत्यत्रापत्यपदं चतुर्थपरमात्रमिति न भ्रमितव्यम् । न पतन्त्यनेनेति व्युत्पत्त्या चतुर्थप्रभृतीनामपि तद्वाचकमिति विवेचनीयम्। 'त्रिपुरुष पतितसावित्रीकाणामपत्ये' इत्यनेन चतुर्थादौ व्रात्यस्तोमाभावे नाध्यापनमित्युक्तं पारस्करेण। तद्विषय एवाऽऽपस्तम्ब कृतोदकस्पर्शस्यापि नाध्यापनमित्यध्यापनाभावो निरस्त । स विषयविषये व्रात्यस्तोमवच्चनाकरणाभ्यामेवाध्ययनानध्ययने इति समर्थनीय । अविरोधेन

सम्भवत्यर्थे विरोधस्याऽनुचितत्वात् । तस्मात्सकलस्मृतिवचनानुरोधेन नाध्यापनमिति वचनं व्रात्यस्तोमाद्यसमर्थविषयमिति सम्यगिदमवदातमित्यापस्तम्ववचनयोजना ॥

अथ याज्ञवल्क्यवचनयोजना । आषोडशादिति । आङभिविधाविस्यायर्थः पारस्करसूत्रवदेव योजनीयः, अत ऊर्ध्वमुपनयनाभावात् । षोडशवर्षादूर्ध्वं सर्वधर्मबहिष्कृताः स्मार्तश्रौतधर्मबहिष्कृताः सन्तः सावित्रीपतिता व्रात्याः व्रात्यशब्दार्हाः व्रात्यस्तोमादृते पतन्ति स्वोचितस्थानादधः पतन्ति, व्रात्यस्तोमे सति तु अव्रात्या अपतितसावित्रीकाः श्रौतस्मार्तधर्माधिकारिणो, न पतन्तीत्यर्थः । अत्राऽऽपस्तम्बाद्युक्तप्रायश्चित्तानां क्षुद्रत्वात्त्रोपनयनाधिकारकरमेकं वेदाध्ययनाधिकारपरमन्यदिति विभागः समादृतः । व्रात्यस्तोमस्तु सर्वोत्तरत्वाच्चिरवशेषं सर्वैनोनिहन्तृत्वात्, व्रात्यस्तोमेनैकेनैवोपनयनस्मार्तश्रौतकर्माधिकारसिद्धेर्याज्ञवल्क्येन, व्रात्यस्तोम एवैको निरुक्तः प्रायश्चित्तत्वेन । अत एव वसिष्ठवचने उद्दालकव्रतादश्वमेधावभृथस्नानमधिकफलं ब्रह्महत्यादिमहापातकनिवर्तकस्य क्षुद्रोपपातकनिवर्तकत्वे सन्देहाभावादिति पठित्वा ततोऽप्यश्वमेधावभृथस्नानादतिप्रशस्तो व्रात्यस्तोम इति पश्चात्पाठो व्रात्यस्तोमस्याऽऽदृतः, सङ्गतो भवति । अत एव च पारस्करसूत्रे आषोडशादित्यादिना पतितसावित्रीकत्वं निरुच्य पतितसावित्रीकताया उपपातकरूपत्वात् 'कालातिक्रमे नियतवत्' इति उपपातकनियतं यत्प्रायश्चित्तं तद्वत् प्रायश्चित्तं विधेयमिति सामान्यप्रायश्चित्तमापस्तम्बसमं विधाय 'त्रिपुरुषं पतितसावित्रीकाणामपत्ये' इत्यादिना 'कालातिक्रम' इत्युपपातकप्रायश्चित्तेन न विस्पष्टा शुद्धिरिति नोपनयनादिसंस्काराध्ययनादि भवितुमर्हतीति 'तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा' इति याज्ञकपितृपितामहादीनां व्रात्यस्तोमोत्तरमुपनयनाध्ययनादियसकलसंस्कारार्हतेति मनसि निधाय व्रात्यस्तोममतिविशिष्टं याज्ञवल्क्यवचनवदेवादाय

यत्नवत्तरदोषेऽपि बहुजनव्रात्यतालक्षणे प्रायश्चित्तरूपस्यैकद्वित्र्यादिव्रात्यतानिवर्तकता सहजसिद्धेति त्रिपुरुषमिति कथं सङ्गतं भवति ॥

अथ मनुवचनयोजना । आषोडशादित्यादि । अत्राऽऽषोडशादिविवेचनं पारस्करसूत्रवदेव । 'नैतैरपूतैर्विधिवत्' इति मनौ विशिष्य पतितसावित्रीकत्वनिवृत्तये याज्ञवल्क्यादिवत् प्रायश्चित्तं नाऽऽम्नातं, परन्तूपपातकत्वादस्योपपातकसामान्यप्रायश्चित्तं चान्द्रायणपराकादिकं याज्ञवल्क्योक्तं व्रात्यस्तोमोद्दालकव्रतादि च पतितसावित्रीकत्वदोषापनिर्हरणायाऽभिप्रेतमिति नैतैरित्यादिना सूच्यते ।

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥

इति मनुवचनं न पतितसावित्रीकत्वदोषपरिहारपरम्, अविध्युपनयने घनगर्जनादिना विध्युल्लङ्घनेनोपनयने कृच्छ्रत्रयानुष्ठापनेन पुनरुपनयनपरम्, इतरथा पतितसावित्रीकप्रायश्चित्तत्वे 'नानूच्येत यथाविधि' षोडशवर्षादिमध्ये उपनयनाभावात् कृच्छ्रत्रयानन्तरं यथाविधि षोडशवर्षमध्ये एवोपनयेदित्यर्थासङ्गतेः । अतीते षोडशे पुनः षोडशवर्षमध्यत्वसम्पादनायोगात् षोडशवार्षिकताया गतायाः पुनरागमनायोगात् । घनगर्जनादौ जाते उपनयने पुनर्घनगर्जनादिरहिते काले उपनयनं विधेयमिति तु सङ्गतं भवति । स्वाध्यायघनगर्जनादिरहितकालस्याभ्यां वर्तमानतया तत्प्रतीक्षणसम्भवात् । षोडशवार्षिकत्वे जातेऽष्टवर्षत्वादेः सम्पादनानर्हत्वादिति । यावकव्रतपरं यमवचनमुपनयनोत्तरं दैवान्मानुषाद्वाऽपराधात् पञ्चदशवर्षपर्यन्तं नित्यसन्ध्यावन्दनाविलोपे उपपातकत्वात्तत्प्रायश्चित्तपरम् । तदपि प्रायश्चित्तं 'कालातिक्रमे' इति सूत्रेणोपपातकसामान्यप्रायश्चित्तेन सह सङ्गतं भवति । वसिष्ठवचने उद्दालकव्रताश्वमेधावभृथस्नानव्रात्यस्तोमा विकल्पेन पतितसावित्रीकत्वप्रायश्चित्तभूता इति केचित् । उद्दालकव्रतेन सहाऽश्वमेधावभृथस्नानव्रात्यस्तोमान्यतरः

समुच्चित इत्यपरे । अश्वमेधस्नानव्रात्यस्तोमयोरतिविशिष्टत्वात्स्वत-न्त्रावेव, नोद्दालकव्रतसमुच्चयापेक्षिणौ याज्ञवल्क्येन केवलव्रात्यस्तोम-स्य परिग्रहादित्यन्ये ।

अत्रायं सङ्ग्रहः—याज्ञवल्क्यवचनेन व्रात्यस्तोमतः सर्वकर्मार्हताभि-धानादुपनयनमध्ययनञ्च भवति । अत्र प्रथमपर्वणि आपस्तम्बोक्तं ऋतुं त्रैविद्यकं ब्रह्मचर्यं यमोक्तं यावकव्रतं वसिष्ठोक्तमुद्दालकव्रतमुपपात-कप्रायश्चित्तचान्द्रायणादिकञ्च याज्ञवल्क्योक्तव्रात्यस्तोमेन वैकल्पिकमु-पनयनाधिकारसम्पादकम् । वेदाध्ययनाधिकारसम्पादकं पुनरापस्त-म्बोक्तं संवत्सरोदकोपस्पर्शनम् । वसिष्ठोक्ताश्वमेधावभृथस्नानव्रात्यस्तो-मान्यतरश्च वैकल्पिकम् । अथ द्वितीये पर्याये ऋतुं त्रैविद्यकं ब्रह्मचर्यं यमोक्तयावकव्रतं वसिष्ठोक्तोद्दालकव्रतञ्चेत्येतानि वैकल्पिकानि षड्गुणि-तानि पितृपितामहानुपनये उपनयनाधिकारकप्रायश्चित्तानि । तत्र यथा 'प्रथमेऽतिक्रमे ऋतुरेवं वत्सर' इत्यापस्तम्बवचने 'यस्य पितामह' इत्युपक्रमात् 'तेषां प्रायश्चित्तम्' इति निर्देशात् त्रिभिरपि संवत्सरब्रह्म-चर्यं कर्तव्यम् । तत्राऽयं विभागः—पितामहव्रात्यतानिमित्तमेकर्तुब्रह्मच-र्यमुत्तरोत्तरं व्रात्यताभिवृद्धेर्बालकस्य वत्सरब्रह्मचर्यमपेक्षितम् । पिता-महस्य पुनः स्वार्थमेकर्तुब्रह्मचर्यं व्रात्यतादशायां व्रात्यपुत्रोत्पादनात् व्रात्यताऽभिवृद्धेति ऋतुब्रह्मचर्यं व्रात्यपुत्राद् व्रात्यपुत्रजननाद् व्रात्य-तायाः पुनरतिवृद्धेः ऋतुब्रह्मचर्यञ्चापेक्षितमिति संवत्सरब्रह्मचर्यमपे-क्षितम् । पितुः पुनः स्वपितुर्व्रात्यतानिमित्तमेकर्तुब्रह्मचर्यं स्वार्थं ऋतुं-ब्रह्मचर्यं पुत्रार्थं ऋतुब्रह्मचर्यं व्रात्यतादशायां स्वस्योत्पत्तेः स्वपुत्रो-त्पत्तेश्चोत्तरोत्तरं व्रात्यताप्राबल्यात् । तथा च स्वस्यैव बालकस्या-ऽनुपनयने एकर्तुब्रह्मचर्यं, पितुश्चानुपनयने ऋतुब्रह्मचर्यमिति विभ-जनीयम् । एवञ्च त्रयाणामपि बालकपितृपितामहानां व्रात्यतासु या-वकादीनां षड्गुण्यानि कथितानि । तत्र ऋतुब्रह्मचर्यवदेव स्वस्य बालस्य पितुश्च व्रात्यतायां त्रिगुणमेवानुष्ठेयमिति सिद्धम् । वेदा-

ध्ययनाधिकारसम्पादकं पुनरापस्तम्बोक्तपुरुषसङ्ख्याप्रमितवत्सरोदकोपस्पर्शनं वसिष्ठोक्ताश्वमेधावभृथस्नानं तदुक्तव्रात्यस्तोमो वा। अथ तृतीये पर्याये उपनयनाधिकारसम्पादकं द्वादशवर्षत्रैविद्यकं ब्रह्मचर्यमापस्तम्बोक्तं, यमोक्तद्विसप्ततियावकव्रतानि, वसिष्ठोक्तद्विसप्तत्युद्दालकव्रतानि याज्ञवल्क्योक्तव्रात्यस्तोमो वा। द्वादशवर्षब्रह्मचर्यव्रतादिनाऽतिक्लेशादालस्यादिना सकृदेवैकस्मिन्दिने पावमान्यादिभिः स्नानं करोति चेत्तर्हि तद्दिनमारभ्यैव स्मार्तधर्मपरिग्रहाधिकारः। कालेत्याद्यनुसन्धेयम्। कालातिक्रमे बहुकालरूपे यावकप्रत्याम्नायचतुर्दशप्राजापत्यानि ग्राह्याणि। अल्पकाले सति उद्दालकव्रतप्रत्याम्नायसपाददशप्राजापत्यानि, एकतुब्रह्मचर्यप्रत्याम्नायप्राजापत्यानि, कालातिक्रमाल्पत्वबाहुल्याभ्यां सपाददश चतुर्दश वा भवन्ति। अयञ्च विभागो बालक एव। पितृपितामहव्रात्यतायां चतुर्दशप्राजापत्यान्येव भवेयुः, कालदैर्घ्येनेयत्यादित्यनुसन्धेयम्। पूर्वं महत्तरव्रतानुष्ठानादेनसां निवृत्तेरल्पमात्रे एनसि सति तत्रालस्यादिना सकृदेव स्नानात्स्मार्तधर्मपरिग्रहेण कालयापने कालान्तरं सम्पूर्णोदकस्पर्शादध्ययनं सम्पादनीयमितीच्छायां सत्यां सम्पूर्णोदकस्पर्शमन्तराऽस्मिन्दिवङ्गते सति स्मार्तानुष्ठानकाले जातपुत्रस्य संस्कारो 'प्रथा प्रथमेऽतिक्रमे' इति निर्देशात् पितुरुपनयनपर्यन्तमनुष्ठानेन पुत्रस्याप्युपनयनपर्यन्ताधिकाराद्रुपनयने जाते पश्चादध्ययनाय पित्रा सम्पूर्णोदकस्पर्शाकरणात् पुत्रस्य संवत्सरपर्यन्तोदकोपस्पर्शेऽध्ययनेऽधिकारः। तत्पुत्रादूर्ध्वन्तु प्रसिद्धद्विजपुत्रादीनां यथातथैव कर्तव्यं स्वाभाविकमेव। एवञ्च पितुरपि पूर्वमुपनयनात् द्वादशवर्षव्रतेनैव सर्वैनसां विलयात् स्वल्पेनस्त्वात्प्रथमपर्याये यत्संवत्सरोदकोपस्पर्शनं तावतैवाध्ययनाधिकार इति सम्मितम्। तत्रालस्यादिना कालान्तरे उदकोपस्पर्शनं विधेयमितीच्छायामेव मरणे तत्पुत्रे संवत्सरोदकोपस्पर्शनेनाऽध्ययनाधिकारे पितुः सुतरां संवत्सरोपस्पर्शनेनाऽधिकारौचित्यात्। एवं

तृतीये पर्याये न स्नाने गौरवं किन्तु प्रथमपर्यायवदेव स्नानं ब्रह्मचर्यादाविवाऽतिगौरवपरिग्रहात् । एवञ्च संवत्सरस्नानं तत्समकल्पमश्वमेधावभृथस्थानं व्रात्यस्तोमो वैकोऽध्ययनाधिकारहेतुरिति विवेचनीयम् । तत्र संवत्सरोदकोपस्पर्शे त्रिषवणमुदकोपस्पर्शनिर्देशात् दिनचतुष्टयेनैकं प्राजापत्यं द्वादशस्नानेनैकप्राजापत्यस्मरणात् । तथा च संवत्सरस्नानस्य नवतिप्राजापत्यानि भवन्ति । यमोक्तयावकव्रतप्रत्याम्नायानि चतुर्दश प्राजापत्यानि । उद्दालकव्रतप्रत्याम्नायानि सपादद्दशप्राजापत्यानि । संवत्सरस्नानस्थानेऽश्वमेधावभृथव्रात्यस्तोमयोर्वसिष्ठेन निर्देशात् त्रयं समबलमेव ॥

अथ 'त्रिपुरुषं पतितसावित्रीकाणामपत्ये' इत्यत्र पतितसावित्रीकाणां चतुराद्याधिक्येऽपि व्रात्यस्तोमनिमित्तमस्ति 'ऐन्द्राग्नस्थल इव' इत्युक्तं, तत्कथमिति चेदित्थम् । तथा हि–'ऐन्द्राग्नम्पुनरुत्सृष्टमालभेत य आतृतीयात्पुरुषात्सोमं न पिबेत्' इति सोमपानाभाव ऐन्द्राग्नप्रयोजक उक्तः । एवम्–'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्' इति दौर्ब्राह्मण्यसमेता सोमपिपासा आश्विनप्रयोजिकोक्ता । एवम्—

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम न सोमं पातुमर्हति ॥

'यश्चैव वृषलीपतिः', 'सर्वकर्मबहिष्कृत' इति पाठभेदः । तत्रानया स्मृत्या दौर्ब्राह्मण्यं समाम्नातम् । अथैन्द्राग्नाश्विनप्रयोजके स्मार्तश्चैतानि दौर्ब्राह्मण्यानि त्रीणि किं विजातीयानि । किं वा सर्वमेकविधमेव दौर्ब्राह्मण्यमाहोस्वित् नानापि दौर्ब्राह्मण्यानि द्वैरात्रनयेन ऐन्द्राग्नप्रयोजकतयाऽऽश्विनप्रयोजकतया च श्रुतिभ्यां परिगृहीतानि । स्मृतिस्तु श्रुतिद्वयानुमतदौर्ब्राह्मण्यद्वयप्रकाशिकेति विषये प्रमाणभेदादिह त्रीणि दौर्ब्राह्मण्यानीति यदि । तन्न, त्रिभिरपि प्रमाणैर्न त्रिविधं दौर्ब्राह्मण्यं प्रतिपाद्यते, किन्तु श्रुतिभ्यां द्वे दौर्ब्राह्मण्ये प्रतिपा-

येते। स्मृतिस्तु द्विविधदौर्ब्राह्मण्यानुवादिका, न तु तृतीयं दौर्ब्राह्मण्यं प्रतिपादयति। तद्दौर्ब्राह्मण्ये निमित्ते नैमित्तिकस्यापरस्याऽकथनात्। तत्र स्मृतावैन्द्राग्नो वेदीसम्बन्धविच्छेदनिमित्तकः। वेदीविच्छेदश्च सोमविच्छेदलक्षण एव। 'ऐन्द्राग्नं पुनरुत्सृष्टम्' इति मूलभूतश्रुत्या सोमपानाभावस्य निमित्तत्वेन स्पष्टं प्रत्यायनात्। आश्विनस्तु पशुर्दौर्ब्राह्मण्यनिमित्तकः। यस्य वेदश्चेति स्मृत्या वेदच्छेदस्य दौर्ब्राह्मण्यसम्पादकतया प्रत्यायनात्तद्दौर्ब्राह्मण्यस्य 'आश्विने अश्विनम्' इत्यादिश्रुत्या निमित्तप्रत्ययात्। अथ यस्य वेदश्चेति स्मृत्या वेदवेदीविच्छेदस्य दौर्ब्राह्मण्यहेतुत्वेन प्रत्यायनात् सोमविच्छेदस्य च वेदविच्छेदान्तर्गतत्वादाश्विनमित्यादिश्रुतिविहिताश्विनेनैव वेदवेदीविच्छेदजनितदोषसामान्यनिवृत्तेराश्विने कृते नैन्द्राग्नः कर्तव्य इति चेत्, निमित्तभेदादुभावपि समुचितावैन्द्राग्नाश्विनावित्युपदेश इति केचित्।

अत्रायमाशयो माधवाचार्यैर्लिखितः-'पुनरुत्सृष्टे यज्ञो विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्नातृतीयात्पुरुषात्सोमं न पिबति' इति निर्देशेन सोमपानविच्छेदप्रयुक्तदौर्ब्राह्मण्येन क्रत्वनधिकारः इत्यैन्द्राग्नेन क्रत्वधिकारः सिध्यति। आश्विने तु 'यो दुर्ब्राह्मणः सोमं पिपासेत्' इति निर्देशात् सोमपानश्रद्धालुत्वे सति दुर्ब्राह्मणोऽधिक्रियते। एवञ्च ब्रह्मवर्चसप्रतिबन्धकीभूतदौर्ब्राह्मण्यापनुत्तये आश्विनः पशुः, क्रत्वधिकारप्रतिबन्धकीभूतदौर्ब्राह्मण्यहरणायैन्द्राग्नः पशुरिति सिद्धं भवति। तत्राश्विनवाक्ये प्रान्ते 'यद्धूम्रो भवति धूम्रिमाणमेवास्मादपहन्ति ललामो भवति मुखत एवास्मिन् तेजो दधाति इति वचसि पशोर्धूम्रवर्णेन दौर्ब्राह्मण्यलक्षणं धूम्रिमाणं मालिन्यमस्माद्यजमानादपहन्ति ललामघोषत्वेन त्वस्मिन् यजमाने मुखत एव मुख्यमेव ब्रह्मवर्चसलक्षणं तेजो दधातीत्यर्थके ब्रह्मवर्चसफलस्य स्पष्टत्वादब्रह्मवर्चसप्रतिबन्धकीभूतदौर्ब्राह्मण्यसामान्यमाश्विनेन निवर्त्यते। अत्रैन्द्राग्नाश्विननिवर्त्यं दौर्ब्राह्मण्यद्वयं यस्य वेदश्चेति स्मृत्या

निरूपितम्। अत्र वेदविच्छेदकथनादेव वेदिविच्छेदस्याऽप्यर्थसिद्धत्वाद्वेदपूर्वकत्वाद्वेदेः पुनरपि वेदिविच्छेदकथनमर्थभेदसूचनायैव भवति। तत्र वेदस्याध्ययनद्वारा ब्रह्मवर्चससम्पादकत्वं मन्त्ररूपपदार्थविधया अर्थज्ञानद्वारा च कर्मोपयोगित्वञ्चेति द्वे रूपे भवतः। तत्र कर्मोपयुक्तरूपद्वारा वेदिनिर्वर्तकत्वं, रूपान्तरेण ब्रह्मवर्चसहेतुत्वम्। तत्र वेदविच्छेदकथनं ब्रह्मवर्चसप्रतिबन्धकीभूतदौर्ब्राह्मण्यपरम्। वेदिविच्छेदकथनन्तु क्रत्वनधिकारनिमित्तभूतदौर्ब्राह्मण्यज्ञापकम्। एवं वेदी चेति चकारेणैवोक्तसमुच्चयसम्भवाद्वेदश्चेति चकारोऽनतिप्रयोजनः सन्ननुक्तसमुच्चयपरः। एवञ्च 'यथाकाना यथाचाना' इतिश्रुतिगमिताचारस्य शीलादिलक्षणस्य समुचितस्य विच्छेदो वेदविच्छेदसमो व्रात्यस्तोमनिवर्त्यव्रात्यतारूपस्ताण्ड्यब्राह्मणेन परिगृहीत इह सङ्गृहीतो भवति। अत्र 'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्' इत्यत्र पिबेदित्यनुक्त्वा पिपासेदिति सनो निर्देशात् प्राथमिकक्रतुप्रयोगेच्छैव परिगृहीता भवति न तु तदुत्तरक्रतुप्रयोगेच्छापि। 'अश्विनौ वै देवानामसोमपावास्तां तौ पश्चात्सोमपीथं प्राप्नुतामश्विनावेतस्य देवता' इति वाक्यशेषे प्रथमसोमपानस्यैव प्रत्यायनेन तद्देवताकयजमानस्यापि यात्स्कौचित्यात्। अत्र वेदादिविच्छेदमूलकदौर्ब्राह्मण्यनिर्हणाधीयमानब्रह्मवर्चसफलाय प्राथमिकसोमप्रयोगमाश्रित्याश्विनो विधीयते। तत्र 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र साक्षाद्वाजपेये सप्तदशत्वान्वयायोगेऽपि तदङ्गपशुद्वारा यथाऽन्वयस्तथा साक्षात्सोमस्य पदवाश्रयत्वाभावेऽपि सामाङ्गभूताग्नीषोमीयतन्त्रद्वाराऽऽश्रयत्वद्गुरुते। ननु सवनाय पशुतन्त्रमेव कुतो नाश्रयः, अग्नीषोमीयपर्यन्तानुधावने को हेतुरिति चेत्सत्यं, पिपासेदिति स्पष्टमिच्छाकालिकसोमाङ्गाश्रयणस्य सूचनात्। सवनीयपशुकाले ऋत्विककर्तृकसोमयागस्य शास्त्रयजमानानुमतिपूर्वकस्य प्रवृत्तत्वेन पिपासेदित्यस्य सोमप्रवृत्तीच्छयोरयमिच्छाकालत्वाभावात्सवनीयपशोराश्र-

यत्वं प्रमाणाननुरूपमेवेत्यप्रविमोयस्यैवाश्रयत्वं प्रमाणानुगुणत्वात्परिग्राह्यम्। तथा चाऽऽश्विनपशुवचनं गुणफलविधिर्गोदोहनेन पशुकामस्येति वचनवदिति सिद्धं भवति। ऐन्द्राग्नस्तृतीयपुरुषपर्यन्तसोमविच्छेदसम्भूतदोषोपशमनद्वारा सोमाधिकारसम्पादकत्वादाधानोत्तर सोमात्पूर्वं यथायोग कर्तव्यो भवति। आश्विनः पुनरग्नीषोमीयकाल एव प्रथमसोमाश्रयकत्वात्। एवञ्च प्रथमसोमात्पूर्वभाविब्रह्मवर्चसाभावनिदानीभूतदौर्ब्राह्मण्यप्रथमसोमाश्रितेनाश्विनेन निवर्तते। तथाचाश्विनः काम्यो गोदोहनवत्, न तु क्रत्वनाधिकारहेतुदौर्ब्राह्मण्यनिवर्तकः। ऐन्द्राग्न एव तादृग्दौर्ब्राह्मण्यनिवर्तनद्वाराऽधिकारसम्पादकः। अत एव कात्यायनेन क्रत्वनधिकारव्यावर्तनद्वाराऽधिकारसम्पादनपर ऐन्द्राग्न एव सूत्रितो न त्वाश्विन। यदि चाऽऽश्विनोऽप्यैन्द्राग्नवदधिकारे हेतुः स्यात्समुच्चितस्य तर्हि 'सर्वशाखाप्रत्यय' न्यायेन क्रत्वधिकारप्रतिपत्तये ऐन्द्राग्नवदाश्विनोऽपि सूत्रितः स्यात्, न तथा, तस्मादाश्विनो ब्रह्मवर्चसप्रतिबन्धकीभूतदोषनिर्हरणपरत्वेन भिन्नफल एव। अत एव कात्यायनिनः केवलैन्द्राग्नानुष्ठानेनैव क्रतुं सगुणं मन्वते। एवञ्च कात्यायनिनामितरेषां वा ब्रह्मवर्चसप्रतिबन्धकीभूतदोषनिर्हरणकामनायां प्रथमसोमप्रयोगे सति पशुराश्विनः कर्तव्य। ऐन्द्राग्नेनैव प्रथमप्रयोगे सति तु ब्रह्मवर्चसप्रतिबन्धकीभूतो दोषस्तदवस्थ एव भवेत्। प्रथमसोमोत्तर ब्रह्मवर्चसप्रतिबन्धकदोषनिर्हरणकामनायां तु ताण्ड्यब्राह्मणाद्युक्तव्रात्यस्तोमादय एवाऽनुष्ठेयाः। तत्र व्रात्यता नानाविधा। तृतीयपुरुषपर्यन्तवेदाचाराद्विच्छेदस्ताण्ड्युपात्ता चेति। तत्रानुपनयनादिप्रयुक्तव्रात्यतादिनिवृत्तावपि तत्तत्प्रमाणप्रवर्तनं समर्थमिति विवेकः।

> त्रिकाण्डमण्डनास्तु पक्षान् बहूनिह साञ्चिक्षिपुः।
> एकस्य सोमविच्छेदे केचिदैन्द्राग्नमब्रुवन्।
> त्रयाणां सततं लुप्ते सोमे त्वैन्द्राग्नमाश्विनम्॥

पिता पितामहो वापि सोमं यस्य न पीतवान्।
दुर्ब्राह्मणं तमाचष्टे कर्कः शाखान्तरश्रुतेः॥ इति।

गोपालास्तु—

सोमेन यक्ष्यमाणस्य यस्य पित्रादयस्त्रयः।
नेजिरे सोमयागेन स स्याद्विच्छिन्नसोमपः॥
आलभेत स ऐन्द्राग्नमवशीर्णगवं पशुम्।
पुनरुत्सृष्टवाच्यो हि बाहोत्सृष्टः पुनर्वहन्॥
छागेऽपि संभवस्येतद्वहत्येव हिमाचले।
स्वकण्ठेन भरद्वाजः सुस्पष्टमिदमब्रवीत्॥
विच्छिन्नसोमपीथो वा दुर्ब्राह्मण इतीरितः। इति।

अत्र 'य आतृतीयात्पुरुषात्सोमं न पिबेत्' इत्यत्र यष्टुः पुरुषात् तृतीयः पितामहः। आङ् मर्यादायाम्। एवञ्च पितुः सोमपानाभावे ऐन्द्राग्नः। अयमर्थ एकस्येति प्रथमकल्पेन गृहीतः। यदि चाङ् अभिव्याप्तौ, तर्हि पितृपितामहयोः सोमापाने ऐन्द्राग्नः। अयमर्थः पितेत्यादिद्वितीयकल्पेन गृहीतः। यदि च यष्टारमपहाय पितरमारभ्य त्रिपुरुषपरिग्रहस्तर्हि प्रपितामहपर्यन्तं सोमापाने ऐन्द्राग्नः। अयमर्थस्त्रयाणां पित्रादयस्त्रय इत्येताभ्यां परिगृहीतः। तत्र 'विच्छिन्नसोमपीथो वा दुर्ब्राह्मण इतीरित' इति पक्षेण दौर्ब्राह्मण्यहराऽऽदिवनस्यैन्द्राग्नेनाऽसोमपयाज्ञुल्यात्समुचितः। अयमर्थस्त्रयाणामिति मध्यकल्पेन सङ्गृहीतः। तत्र कर्कपक्ष एव साधुः, यष्टुरेव तृतीयावधित्वौचित्यात्। यस्य पिता न सोमं पिबेदिति स्पष्टमुक्त्वा आतृतीयादिति गुरुतरनिर्देशेनाऽऽङोऽभिव्याप्तिपरत्वौचित्यात्। असोमपयाज्ञुल्याद्दौर्ब्राह्मण्येनादिवन इत्यप्यसङ्गतं कात्यायनसूत्रविरोधात्। तत्राऽसोमपत्वदोषपरिहारायादिवनादिवयन्धनात्। अत एव दौर्ब्राह्मण्यं नाऽसोमपत्वप्रयुक्तं किन्तु वेदाचारविहीनत्वप्रयुक्तम्। ब्रह्मवर्चसामावबीजभूतकलुषं विलक्षणमिति विवेकः॥

केचित्तु—

सावित्रीमात्रसारोऽपि नाऽसौ दुर्ब्राह्मणो भवेत्।

इति स्मृतेरतिक्रान्ते सावित्र्याः काले 'यस्य पिता पितामह इत्यनुपेतौ स्याताम्' इति आपस्तम्बवचनात्,

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।

इति याज्ञवल्क्यवचनात्,

आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः।

इति मनुवचनात्, 'अत ऊर्ध्वं पतितसावित्रीका भवन्ति' इति पारस्करवचनात् मानान्तरैश्च ज्ञापितदौर्ब्राह्मण्यनिवृत्तयेऽपि आश्विनः पशुः। ऐन्द्राग्नस्तु सोमविच्छेदप्रयुक्तकृतवनधिकारपरिहारायेत्याहुः॥

तदेतदतिपेशलं,'सावित्रीमात्रसारोऽपी'ति स्मृति'र्नासौ दुर्ब्राह्मणो भवे'दिति पातित्याभावमेव ब्रूते न तु ब्रह्मवर्चसप्रतिबन्धकीभूतदौर्ब्राह्मण्याभावम्।'यस्य वेदश्च वेदी चे'ति स्मृतिरन्यथाऽनर्थिकैव भवेत्। एवं 'यो दुर्ब्राह्मणः सोमं पिपासेत्' इति वाक्ये सोमं पिपासेदित्यंशोऽनर्थकः स्यात्।'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मण' इत्येतावतैवाऽभिमतार्थलाभसम्भवात्। अतः प्रागुक्तरीत्यैवाश्विनविनियोगः समुचित इति दिक्॥

अथ 'य आतृतीयात्पुरुषात्सोमं न पिबेत्' इत्यत्र तृतीयम्पुरुषं मर्यादीकृत्याऽभिव्याप्तीकृत्य वा सोमपानाभावस्यैन्द्राग्ननिमित्तत्वात् पुरुषत्रयादूर्ध्वमपि सोमपानाभावे कथमैन्द्राग्नानुष्ठानं निमित्ताभावादिति चेत्सत्यम्, सहस्रे शतसङ्ख्यावद्बहुपुरुषाणां ब्रह्मवृद्धिमारभ्य

प्रवृत्तानां सोमपानाभावे सति तत्र त्रिपुरुषसोमपानाभावोऽपि सिद्ध इति निमित्तसत्त्वादैन्द्राग्नो भवेदेव । न च त्रिपुरुषोर्ध्वमधिकपुरुषसोमपानाभावे एनसो बाहुल्यादेकेनैन्द्राग्नेन तदेनसः कथं विलय इति वाच्यम्, सोमपानाभावबाहुल्यप्रयुक्तैनसां बहुत्वेऽपि सर्वैनसां सन्निधाने जायमानैन्द्राग्नादृष्टवशतो नाशसम्भवात् । अतिक्षुद्राग्निकिरणस्पर्शमात्रेण तूलराशेरल्पस्य महतो वा नाशे भेदाभावात् । एवं त्रिपुरुषमित्यादि पारस्करसूत्रमपि योजनीयम् । कालातिक्रमे नियतवदिति सूत्रं बालकस्यैकस्य पितुश्च द्वयोः पितामहस्य च त्रयाणां पतितसावित्रीकत्वप्रायश्चित्तपरम् । यद्यप्यापोडशादित्युपक्रम्याऽत ऊर्ध्वमित्यनेन बालकस्यैव पतितसावित्रीकत्वमित्युक्त्वा कालातिक्रम इति सूत्रं पठितं बालकस्यैव पतितसावित्रीकत्वप्रायश्चित्तपरं भवितुमर्हति, तथापि त्रिपुरुषं पतितसावित्रीकाणामिति त्रिपुरुषपतितसावित्रीकापत्यप्रायश्चित्तविधानेन प्रथमप्रायश्चित्तस्य पुरुषत्रयसाधारणत्वौचित्यात् । अथ कालातिक्रमे नियतवदिति पुरुषत्रयपर्यन्तपतितसावित्रीकप्रायश्चित्तं त्रिपुरुषपर्यन्तं भवेदेव । त्रिपुरुषादूर्ध्वं पतितसावित्रीकत्वे तु नानेन प्रायश्चित्तेन शुद्धिः, तेन नोपनयनसंस्कारो न वाऽध्यापनं किन्तु व्रात्यस्तोमेनेत्याह त्रिपुरुषमिति । संस्कारो नाऽध्यापनञ्च नेत्यन्वयः तेषां चतुर्णां मध्ये जनः कोपि व्रात्यस्तोमेनेष्ट्वा संस्कारेप्सुर्भवेत् उपनयनसंस्कारेच्छुर्भवेत् । व्रात्यस्तोमं विनोपनयनेच्छा न कार्येत्यर्थः । तत्र प्रमाणमाह काममिति । 'काममधीयीरन् व्यवहार्या भवन्ति' इति वचनात् । ताण्ड्यब्राह्मणवचनतात्पर्यादिति भावः । ताण्ड्यब्राह्मणे ईदृशवचनाभावेन वचनादित्यनेन वचनतात्पर्यादिति लक्षणादिति विवेचनीयम् । अत्राऽनेकपतितसावित्रीकाणां त्रिपुरुषं पतितसावित्रीकोपि भवतीत्यैन्द्राग्नपशुन्यायेन सर्वैनसां व्रात्यस्तोमेन नाशः सम्भवति । विस्फुलिङ्गसम्पर्कतस्तूलराशेरल्पस्य महतो वा नाशदर्शनेन व्रात्यस्तोमाग्निना सर्वव्रात्यतातूलानां

युगपदेव विलयनात्। एवञ्चोपनयनाध्ययनाद्यधिकारः सम्भवति, सर्वस्मादपि प्रायश्चित्ताद्व्रात्यस्तोमस्य बलवत्तमत्वात्। एतत्तुल्यप्रायश्चित्तस्याऽपरस्यालीकत्वात्। अत एव याज्ञवल्क्येन प्रथमपर्वण्यपि व्रात्यस्तोमः प्रायश्चित्तमिति गमितम्। आपस्तम्बसूत्रे 'वर्षा रथकारस्य ये त्रयाणां वर्णानामितरत्कर्म कुर्युस्तेषामेव काल' इति त्रयाणां वर्णानामन्तर्भूता ये रथङ्कुर्वन्ति ते रथकारा इत्यर्थ इति व्याख्यातारः। आश्वलायनसूत्रे 'ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्ययोपक्रुष्टा' इति उपक्रुष्टो रथकारो वैश्यस्तक्षकर्मोपजीवीति तद्व्याख्यायां पूर्वतन्त्रे षष्ठेऽध्याये 'सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्, इति।

मनौ—

व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च॥ इति।

एवञ्च मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रस्तत्पुत्राः सौधन्वना ऋभवः 'ऋभूणान्त्वे'त्याद्यात्तमन्त्रानुगृहीतास्ते शुद्धत्रैवर्णिकेभ्य आचारादिमद्भ्यो विवाहितायां सवर्णायां जाता अपि हीना आचाराद्यभावात्। तेषां विना प्रायश्चित्तमधिकाराभावादाधानान्तर वर्षासु विधीयते। ते च 'रथकाराः नेमिं नयन्ति, इति ऋभूणामेव सौधन्वनानां निर्देशेन मन्त्रवर्णत एव रथकरणयोगसूचनात्। एवञ्च सवर्णायां सवर्णाद्विवाहितायामेवोपनयनसंस्काररहिता व्रात्यपरम्परागता रथकारा भवन्ति। आपस्तम्बवचनात्तु ब्राह्मणादिभ्यस्त्रिभ्योपि व्रात्येभ्यः सवर्णासु विवाहितासु जाता निरुपनयना रथकारा इति सिद्ध्यति। आश्वलायनवचनमपि मनुवचनसममेव नेयम्। मनौ पूर्वमुपनयनप्रकरणे आषोडशादित्यादौ कालातिक्रमे व्रात्यतायाः प्रायश्चित्तेन तत्परिहारस्य च निर्देशेन ताण्ड्यब्राह्मणोक्तव्रात्यस्य क्वाप्यपरिग्रहात्, मनुवचनगतव्रात्यपदं निरुपनयनत्वापत्तेर्व्रात्यतापरं, न तु ताण्ड्यकथितपरम्। उपनयनाभावेन व्रात्यत्वेऽपि विवाहितसवर्णायामेव सन्तानपरम्परेति ग्रेय·

णिकत्वेनाऽऽपस्तम्बनिर्देशः । आश्वलायनवचनेऽपि क्षत्रियवैश्याभ्यां सहपाठश्च रथकारस्य त्रैवर्णिकत्वनिर्णायक इति विवेकः ॥

याज्ञवल्क्ये—

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥
माहिष्येण करण्यान्तु रथकारः प्रजायते ।

इति समुपात्तो रथकार आधानेन ग्राह्यो रथकारपदरूढिमत्त्वेऽपि छागन्यायेन मन्त्रवर्णोदितस्यैव परिग्राह्यत्वेन याज्ञवल्क्योदितरथकारस्य मन्त्रवर्णविरुद्धत्वात्। शङ्खः—'क्षत्रियवैश्यानुलोमानन्तरोत्पन्नो रथकारस्तस्याध्ययनेज्यादानोपनयनसंस्कारक्रियाश्चाऽप्रतिषिद्धा रथसूत्रवास्तुविद्याध्यापनवृत्तिता च' इति । एवमेव वसिष्ठोऽपि । इदं वचनद्वयमपि प्रत्यक्षमन्त्रवर्णविरोधात् याज्ञवल्क्योक्तरथकारपरिग्रहायोगात् 'वर्षासु रथकार' इति वचसो मन्त्रकपरत्वात् रथकारपदाम्नायत्ततयाऽऽधानस्योपनयनाद्याक्षेपकत्वसामर्थ्याभावेन तदाक्षेपकत्वस्याम्नायत्ततया च न्यायाभासमूलकं विवेचनीयम् । एवं बौधायनसूत्रमपि रथकारोपनयनादिपरं न्यायाभासापन्नमिति दिक् ॥

'आधावेति शूद्रस्य अधीयदश्वं शूद्रस्य मस्तु शूद्रस्य' इति श्रुतौ लिङ्गदर्शनात् परम्परया शूद्रासम्बन्धात् याज्ञवल्क्योक्तरथकारस्याधानोपनयनादिकं श्रुत्यनुमतमेव । अत एवाऽऽपस्तम्बेऽपि दर्शपूर्णमासप्रकरणे—'एहीति ब्राह्मणस्याऽऽगहीति राजन्यस्याऽऽद्रवेति वैश्यस्याऽऽधावेति शूद्रस्येति' शूद्रस्य दर्शपूर्णमासाधिकारं सूचयति स्मेति चेत् सर्वमिदं श्रुत्यननुमतमेव । तथा हि बाह्वृचदर्शपूर्णमासप्रकरणे—'अथ हविष्कृतमुद्वादयति हविष्कृदेहीति पाणी हविष्कृद्वाचमेव तद्विसृजते वाग्घ वा एतस्यैतस्य पुनरुपह्वयते' इति हविष्कृदाह्वानकाले वाग्विसर्गार्थं मन्त्रादिप्राप्तिर्न्यायतानुमानस्य हविष्कृदाह्वानसंयोगः समवायान्यात् याग्मयेवं मन्त्रोपात्ता हविष्कृत्संस्तुता तदनन्तरमेहीति मन्त्र-

गतपदप्रशंसार्थं प्रवृत्ते ब्राह्मण, 'तानि वा एतानि चत्वारि वाचः एहीति ब्राह्मणस्यागह्याद्रवेति वैश्यस्य राजन्यबन्धोश्चाधावेति शूद्रस्य स यदेव ब्राह्मणस्य तदाह तद्धि यज्ञियतममेतदु ह वै वाचः शान्ततमं यदेहीति तस्मादेहीत्येव ब्रूयादिति'। अत्र राजन्यबन्धोरिति निर्देशादुत्तमक्षत्रियस्येदृशमाह्वानं न भवतीति गमितम्। आगह्याद्रवेति युगपन्निर्देशात् ब्राह्मणशूद्रयोरिव पृथक्शब्दनिर्देशाभावादेतत्पदद्वयमुभयत्रापि समानमिति ज्ञापितम्। अत एवोत्तमक्षत्रियत्वाभावाद्वैश्यनिर्देशोत्तरमेव राजन्यबन्धोः पाठः कृतो वैश्यादपि जघन्यतासूचनेन वैश्यपदार्हतापि भवति। राजन्यबन्धोर्यत्पदं तत्पदं तत्पदार्हता वैश्यस्यापीति ज्ञापनाय। अत एवाऽऽपस्तम्बेन राजन्यवैश्ययोर्व्यत्ययेन पदनिर्देशः कृतः। अत्र मन्त्रगत एहीतिपदस्य नित्यवच्छ्रुतस्य लौकिकब्राह्मणाद्याह्वानवाक्चतुष्टयानुवादेन वाक्त्रयस्य एहीत्येव ब्रूयादिति निराकरणपूर्वकं यज्ञियत्वादिगुणेन प्रशंसा कृता अतो नित्यता च गमिता। अत एव कात्यायनेन शतपथभाष्याभिज्ञैर्नेहीति प्रागेव कल्पवद्गत्वेन परिगृहीता। आगह्यादिवाक् चापरिगृहीता। आपस्तम्बवचनन्तु तैत्तिरीये क्वापि वाक्चतुष्टयस्यापि यज्ञाङ्गतानवबोधनादेहीत्यस्यैव तदङ्गताविधानात् शतपथवचने सामान्यतः प्रतीयमानन्यायाभासमूलकमेव। एवं चयनप्रकरणे श्मशाने चयनाय वेदिपरिमाणमाम्नायते। शतपथे-'यावानुद्बाहुस्तावत् क्षत्रियस्य कुर्यात् मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऊरुदघ्नं वैश्यस्याऽष्ठीवद्दघ्नं शूद्रस्यैव वीर्या ह्येते' इति। अथोजान्वेव कुर्यादिति। अत्र चयनं कर्तुं स्मृतिप्राप्तवेदिरनूद्यते। तत्र सर्वजातिसाधारण्येन वेद्यनुवादेऽपि त्रैवर्णिकानामेव चयनं सिध्यति, न रथकारस्य, तस्येतराणां द्विजब्राह्मणानामिव स्मृतिसमायत्तवेदिकामात्रानुवाद एव। एवं कात्यायनसूत्रमपि श्रुतिवदेव योजनीयम्। तथा हि-'ऊर्ध्वप्रमाणमास्य ब्राह्मणस्य, उरः क्षत्रियस्योर्ध्वबाहुर्वा, ऊरु वैश्यस्य, उपस्थं स्त्रिया, जानु शूद्रस्य, सर्वेषां वाऽधोजानु, एवं

पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य, मस्तु शूद्रस्य' इति । अत्र ब्राह्मणादिवर्णानां लौकिकनियमाद्यङ्गभूतपयआदिकं वर्णचतुष्टयोचितमनूद्य सम्भावितक्रतूनां त्रैवर्णिकानां पयआदित्रयं क्रतौ नियम्यते । न त्वेतावता शूद्रस्य क्रत्वधिकारः सिद्ध्यतीति दिक् ॥

वस्तुतस्तु यदि शङ्खवसिष्ठबौधायनवचस्सु याज्ञवल्क्योक्तो माहिष्यकरणीभवः परम्परया शूद्राभवो न गृह्यते किन्तु वैश्याक्षत्रियभवमाहिष्यस्य वैश्यायाञ्जातो रथकार इति तर्हि तस्य भवतु नामाऽध्ययनाद्यधिकारः । 'वर्षासु रथकार आदधीत' इति वचने तु मन्त्रवर्णानुरोधान्मनूक्तरथकार एव ग्राह्यो न तु शङ्खाद्युक्त इति दिक् ॥

अथ वसिष्ठवाक्ये उद्दालकव्रताश्वमेधावभृथस्नानव्रात्यस्तोमाः परिदृश्यमानाः परस्परं वैकल्पिकास्सन्तः साऽध्ययनोपनयननिमित्तभूता भवन्तु किमित्युद्दालकव्रतमुपनयननिमित्तमश्वमेधावभृथस्नानव्रात्यस्तोमान्यतरोऽध्ययनाङ्गमापस्तम्बवचनपरिपाट्येत्युच्यते । आपस्तम्बवचनमुपनिरीक्षणमन्तरैव वसिष्ठवचनप्रवृत्तौ बाधकाभावात् । अपि च–

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ।

इति याज्ञवल्क्यवचनं,वसिष्ठवचनञ्च 'व्रात्यस्तोमेन वा यजेत' इत्येवं लक्षणं ताण्ड्यश्रुतिमूलकमेव भवदुपनयननिमित्तं भवतु न तु व्रात्योपनयनोत्तरभाविनोऽध्ययनस्य निमित्तम् । 'हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्यञ्चरन्ति' इति ब्रह्मचर्यस्योपनयनावलम्बिनोऽभावेन व्रात्यतासूचनेन निरुपनयनत्वप्रयुक्तव्रात्यतापरिहारपरत्वेनैव व्रात्यस्तोमस्य ताण्ड्यब्राह्मणेन विधानमावृत्तमिति प्रत्ययादिति चेदत्रोच्यते, ताण्ड्यब्राह्मणं तावदुपनयनकालापराधप्रयुक्तव्रात्यतापरिहाराय न व्रात्यस्तोमान् विधत्ते ताण्ड्यभाष्याभिधैः कात्यायनाऽऽपस्तम्बशाट्यायनादिभिरन्यथैव तद्योजनसूचनात् । तथा हि ताण्ड्यब्राह्मणे सप्तदशेऽध्याये प्रथमतश्चतुर्भिः खण्डैः क्रमेण चत्वारो व्रात्यस्तोमाः समाम्नाताः–'देवा वै स्वर्गं लोकमायन्' इत्यादिना । तत्र प्रथमे खण्डे

णेनाऽदनीयं अन्नं जनपदभवमन्नं दहेनातीत्यर्थः(?)। एवञ्च समुचित-वृत्तिं जीवनाय कृष्यादिलक्षणां न कुर्वन्ति। तद्विपरीतामशास्त्रीया-मेव ब्रह्मस्वापहरणादिलक्षणां कुर्वन्तीति प्रतिपादनेनाऽधांश कृषिमि-त्यादिवाक्यं विवृतं भवति। एवञ्च न कृषिं ब्रह्मायमित्युभयत्रापि क्रमेण शास्त्रीयवृत्तिसामान्यमशास्त्रीयवृत्तिसामान्यञ्चोपलक्षणवि-धया परिग्राह्यम्। तथा च शास्त्रीयां जीविकां परिहरन्ति, अशा-स्त्रीयां जीविकाञ्च स्वीकुर्वन्तीति सिद्धं भवति। अत एवाऽदण्ड्यं दण्डग्रहणानर्हं जनं दण्डेनोपायभेदतो दण्डग्रहणेन, ततो भर्त्सनाभि-शापनिरोधादिना द्रव्यापहारेण हिंसन्तश्चरन्तीत्यशास्त्रीया वृत्ति-रुक्ता। अत एव च 'अदीक्षिता दीक्षितवाचं वदन्ति' इति स्वयं दी-क्षादिरहिता अपि दीक्षिता वयं क्रत्वर्थं द्रव्यमपेक्षितमिति मिथ्यादी-क्षितवेषधारणेन 'दीक्षितो भूतिं चिन्वीत' इति शास्त्रार्थं प्रकाशयन्तो द्रव्यमर्जयन्तो जीविकापरा इत्यशास्त्रीया वृत्तिरुक्ता। एवञ्च 'हीना वा एते हीयन्ते' इत्यादिवाक्यविवृतिपरेऽस्मिन् वाक्ये 'गरगिर' इत्यादौ परिशेषेण 'न ब्रह्मचर्यञ्चरन्ति' इति स्थाने बहुरत्नमाहुरिति समापतितम्। एवञ्च—

प्रमुखं प्रति दुरुक्तं वदन्तीत्येवार्थोऽस्तु । परन्तु 'न हि ब्रह्मचर्यं'मिति वाक्यं स्मरणं कीर्तनमित्युक्ताऽब्रह्मचर्यपरमेव न तूपनयनाभावपरं तत्र तदशक्तेः । उपनयनोत्तरमेव ब्रह्मचर्यधर्माणामक्षारालवणाशन-गुरुकुलवासादीनां प्रवृत्त्योपनयने ब्रह्मचर्यपदप्रयोगादर्शनात् । लक्षणया तत्परत्वे लक्षणाया एव दोषत्वात् । अत एवैतच्छ्रुतेरभिप्रायं जानताऽनुपनीतव्रात्यो नेह विवक्षित इति मनसि निधाय शाङ्खायनेन अध्ययनेऽभिक्रान्ततमः स्यात् इति, कात्यायनेन 'अनूचानतमो वा' इति निर्दिष्टम् । व्रात्यस्तोमप्रकरणसमाप्तावपि शाङ्खायनेन 'व्रात्यस्तोमेनेष्ट्वा त्रैविद्यवृत्तिं समातिष्ठेयुः' इति कात्यायनेन 'व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुर्व्यवहार्या भवन्ति' इति पुनर्यथेष्टाचरणं न विधेयं वैदिकचर्यैवाऽऽदरणीयेति कथितं, न तूपनेय इति । किञ्च–'उष्णीषञ्च प्रतोदश्च ज्याहुलिका ज्याहोडः होडश्च विपथश्च फलकास्तीर्णः कृष्णसंवासः कृष्णवलक्षे अजिने रजतो निष्कस्तद्गृहपतेर्यन्तू कान्तानिदाम-तुपाणीतरेषां द्वे द्वे दामनी द्वे द्वे उपानहौ द्विपं हितान्यजिनान्येतद्वै व्रात्यधनम्'(?) इति व्रात्यस्तोमचतुष्टयार्थं व्रात्यस्वामिकं धनमाम्नातम् । तत्र यदि 'न हि ब्रह्मचर्यञ्चरन्ति' इत्यनुपनीतपरं स्यादिदं व्रात्यधनमुच्यमानं सकलव्रात्यसाधारणमसङ्गतमेव स्यात् । न ह्यनुपनीतव्रात्यस्येदमसाधारणं धनं किन्तु धूर्तजनानामेवाऽतो नात्र चतुर्विधे व्रात्यस्तोमेऽनुपनयनाय व्रात्यपरिग्रहः । किञ्चादीक्षिता इति निर्देशेन दीक्षार्हाणामेवाऽदीक्षितत्वात्कीर्तनतो निन्दाबोधनेन दीक्षातः पूर्वतनोपनयनादिसंस्काराणां विस्पष्टमेव ज्ञापनात् येऽनुपनीता इति क्वापि पाठादर्शनाच्चेदं प्रकरणमनुपनीतपरमपीति वक्तुमशक्यमेवेति दिक् ॥

एवं द्वितीये खण्डे द्वितीयव्रात्यस्तोमे 'ये नृशंसा निन्दिता सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्' इति धातुकायेन निन्दिततया ब्रह्मचर्याभावब्रह्मस्वापहरणादिलक्षणव्रात्यभावप्रवृत्त्योत्कीर्तनेन नृशंस-

मातः पूर्वमव्रात्यताव्रात्यतयोः समतया सूचनात्।' नृशंसतायां व्रात्यतायाश्च यो नियमाभावेन वृद्धतायामपि तत्संभवात्पूर्वं शुद्धद्विजाताया एव सिद्धेर्नृशंसताधीननिन्दोत्तरत्वनियमस्यानुपनयनायत्तव्रात्यतायामभावात्। न तत्राप्यनुपनीतव्रात्यपरिग्रहः। एवं तृतीये खण्डे तृतीये व्रात्यस्तोमे 'ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्' इति प्रजननसामर्थ्यरूपकनिष्ठत्ववत्त्वे सति ब्रह्मचर्याभावब्रह्मस्वापहरणाद्यन्यतमलक्षणव्रात्यभावं गतानां तृतीयव्रात्यस्तोमविधानात्। प्रजननसामर्थ्यानन्तरं व्रात्यभावस्य कथनेन प्रजननसमर्थस्य च बहुकालमपि सम्भवेनाऽनुपनयनस्य तदनन्तरभावित्वनियमाभावेन नाऽत्राप्यनुपनयनायत्तव्रात्यपरिग्रहः। एवं चतुर्थे खण्डेपि चतुर्थे व्रात्यस्तोमे 'अथैष शमनीचामेढ्राणां स्तोमो ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्' इति प्रजननाभावरूपज्येष्ठत्वे सति परस्वापहरणाद्यन्यतमलक्षणव्रात्यभावं गतानां चतुर्थस्तोमविधानात्। वार्धक्योत्तरं व्रात्यभावप्राप्तिकथनेनाऽनुपनयनलक्षणव्रात्यभावस्य वार्धक्योत्तरभावित्वाभावेनाऽत्रापि नानुपनयनप्रयुक्तव्रात्यतापरिग्रहः॥

अत्रायं विभागः—निन्दार्हनृशंसतोत्तरं ब्रह्मस्वापहरणाब्रह्मचर्याद्यन्यतमव्रात्यत्वे सति द्वितीयो व्रात्यस्तोमः। प्रजननसामर्थ्यानन्तरमब्रह्मचर्यपरस्वापहरणादिलक्षणव्रात्यतायां सत्यां तृतीयव्रात्यस्तोमः। वार्धक्ये अजननलक्षणे सति पश्चात्परस्वापहरणाद्यन्यतमलक्षणव्रात्यतायां चतुर्थः स्तोमः। प्रजननसामर्थ्याविर्भावात्पूर्वं परस्वापहरणादिलक्षणे व्रात्यत्वे नृशंसतानुत्तरभाविनि सति प्रथमो व्रात्यस्तोमः। यौवनात्पूर्वं नृशंसतोत्तरभाविनि व्रात्यत्वे द्वितीयो व्रात्यस्तोमः। यौवनवार्धक्योत्तरमपि नृशंसतोत्तरभाविनि व्रात्यतायां द्वितीयव्रात्यस्तोम एव। यौवनवार्धक्ये च नृशंसतायाः पूर्वमेव व्रात्यत्वे सति तृतीयचतुर्थौ क्रमेण व्रात्यस्तोमौ भवेताम्। यौवनवार्धक्ययोः सर्वथा नृशंसत्वाभावे तु

यथायोगं तृतीयचतुर्थावेव नियतौ । युवभावात्पूर्वं सर्वथा नृशंसत्वाभावे नृशंसत्वात्पूर्वञ्च व्रात्यत्वे सति प्रथम एव । नृशंसतोत्तरं व्रात्यत्वे तु द्वितीय एव । अत्र त्रयस्त्रिंशद्यजमानानामेकरूपतया नृशंसत्वे युवत्वे वृद्धत्वे वा क्रमेण निरुक्तरीत्या त्रयः स्तोमा भवन्ति । यदि सङ्कीर्णाः केचन वृद्धव्रात्याः, केचन युवानः, केचन निन्दिताः, केचन बाला इति क्रमेणाऽनियमेन त्रयस्त्रिंशद्यजमानाः सम्पद्यन्ते तर्हि प्रथम एव व्रात्यस्तोमनियतनिरुक्तलक्षणाभावे प्रथमस्यैव साधारणस्योचितत्वात् । अत एव शाह्यायनेन 'ये केचन व्रात्याः सम्पादयेयुस्ते प्रथमेन यजेरन्' इति कात्यायनेन 'ये व्रात्यगणस्य सम्पादयेयुस्ते प्रथमेन यजेरन्' इति व्रात्यसामान्यमात्रमेव त्रयस्त्रिंशत्सङ्ख्याकं वक्ष्यमाणनियमत्रयरहितं प्रथमव्रात्यस्तोमाधिकारीति निरूपितम् । एवं ताण्ड्यब्राह्मणानुरोधेन चतुर्विधोऽपि व्रात्यस्तोमोऽनुपनीतव्रात्यपरः, किन्तूपनीतविवाहवर्जनपरः । 'न कृषिं न वणिज्याम्' इति 'अदीक्षितम्' इत्यादिना विवाहवदुचितक्रियाया एव समुल्लेखात् । अत एव श्रुतिभावाभिज्ञेन शाह्यायनेन सश्रौकान् मनसि निधाय 'व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनादधाय' इत्युक्तं सङ्गतं भवति । एवञ्च याज्ञवल्क्यवसिष्ठवचनयोः पतितसावित्रीकत्यनिबर्हणपरत्वेन व्रात्यस्तोमे श्रवणं न ताण्ड्यगतं, 'न हि ब्रह्मचर्यञ्चरन्ति' इति वाक्यमूलकम् । तथ्ये सति न्यायाभासमूलकत्वेन प्रामाण्यमेव परिपतेत् । एवञ्च वसिष्ठयाज्ञवल्क्यवचसोर्वचनान्तरमेव किञ्चिन्मूलमित्यनुमेयम्, तत्र यावत्तन्मूलभूता श्रुतिः प्रत्यक्षतो न दृश्यते तावन्न्यायाभासमूलकत्वशङ्कयाऽननुष्ठानलक्षणमप्रामाण्यं सिद्धमेव । एवञ्च सति विरोधाभावादापस्तम्बोक्तमेव पतितसावित्रीकत्वे प्रायश्चित्तमुचितम् । वसिष्ठोक्ते उद्दालकव्रतमश्वमेधावभृथस्नानञ्च विरोधाभावादनुष्ठानार्हे । आपस्तम्बसूत्रे 'यालकपितृपितामहा' इति यालकीपतृपितामहप्रपितामहादय इत्यनुपनीतान् विभज्य तत्राप्युपनयनमध्ययश्चेति विशिष्य विभज्य त्रैविद्यकक्रतुमतमिति त्रैविद्यकसंयतस्य-

त्तमिति त्रैविद्यकद्वादशवर्षव्रतमिति विशेषतः पर्वत्रयभेदेनोपनयननिमित्तमभिधाय संवत्सरस्नानमिति निर्णीतप्रतिपुरुषसङ्ख्याकस्नानमिति पर्वद्वयेऽध्ययननिमित्तं स्पष्टमभिधाय तृतीये पर्वणि पुरुषसङ्ख्यानिर्णयाभावात्स्नानकालनिर्णयाभावादेनसः शङ्कया नाध्यापनमिति विस्पष्टं कथनात् । उद्दालकव्रतस्यैव भूतसकृदनुष्ठितोद्दालकव्रतानिवर्त्यत्वकल्पनायाः स्वबुद्धिप्रभवत्वेन न्यायविरोधादापस्तम्बाविभागेन कथनाभावात् गुरुतरैनसोऽतिलघूपायाऽऽपस्तम्बवचनानुरुद्धमेव योजनमुचितं भवति । अत्र यदि याज्ञवल्क्यवसिष्ठवचसोर्व्रात्यस्तोमानुष्ठानपरयोर्मूलभूतं वचनं ताण्ड्यश्रुतेरन्यत्र कल्प्यते तर्हि तत्किं विभिन्नप्रकरणगतं किं वा ताण्डिमुख्यचतुर्विधव्रात्यस्तोमविधायकप्रकरणगतम् । तत्र प्रथमे पक्षे प्रकरणान्तरत्वात्कर्मान्तरमेव । तत्र यदि कर्मान्तरं साङ्गमेव विहितं तर्हि वसिष्ठयाज्ञवल्क्यवचसोर्नाममात्रेणैव व्रात्यस्तोमसूचनात्तदितिकर्तव्यतानिर्देशाभावात्तदनुष्ठानमेव यावन्मूलदर्शनं रुद्धं स्यात् । यदि कर्मान्तरं प्रकरणान्तरगतं न साङ्गं विहितं नामातिदेशेन ताण्डितो विरुद्धधर्मपरिहारेणाऽविरुद्धा धर्मा नीयन्ते तर्हि तत्कर्म साङ्गमनुष्ठातुं शक्यम् । परन्तु प्रकरणान्तरेऽङ्गानि न सन्ति नामातिदेश एवेति प्रकरणान्तरदर्शनं विना निर्णयानुपपत्तेः सन्देहादननुष्ठानमेव पुनरवशिष्टं यावन्मूलदर्शनम् । यदि च सर्वशाखाद्रष्टृभिः पारस्करप्रभृतिभिरनुपनयनायत्तव्रात्यताप्रायश्चित्तत्वेन व्रात्यस्तोमपरिग्रहात् विशिष्य तत्प्रकरणान्तराम्नानात् ताण्डिब्राह्मणगतधर्मैरेवेतिकर्तव्यता प्राप्नोति नामातिदेशावलम्बेन सूचनात् । प्रकरणान्तरे निरङ्गं कर्मान्तरमिति निर्णीतं स्यात्तर्हि नामातिदेशतोऽविरुद्धा धर्मास्ताण्डिव्रात्यस्तोमाश्रेयाः । तत्र तिर्यगुष्णीषादिव्रात्यधनानि सम्पाद्य प्रलम्बने शुद्रगायकाय मागधदेशीयायाऽविरममात्याचाराय वा देयानीत्यंशो लुप्यत एव, पतितसावित्रीकैः तादृशमात्यतायाः अभावेन प्रारब्धोपात् । यज्ञेनेत्ये·

कथचननिर्देशेन गणयज्ञत्वाभावसूचनादेकयजमानकत्वात्। प्रतिपुरुषं त्रयस्त्रिंशद्गोसम्पादनमपि लुप्यत एव। गृहपतिस्थाने एक एव यजमान इति त्रयस्त्रिंशद्गाव एव दक्षिणा भवन्ति। पक्षान्तरे त्रयस्त्रिंशद्गवां यद्वैगुण्यं गृहपतित्वप्रयुक्तं तदपि न प्रवर्तते गृहपतिस्थाभावादगणयज्ञत्वात्। तत्रापि चतुर्विधेषु व्रात्यस्तोमेष्वपि प्रथमस्यैव धर्मातिदेशेन गच्छन्ति नेतरेषाम्। अन्येषामपि प्रथमत एव धर्माणां नेयत्वेन प्रकृतित एव धर्मग्रहणौचित्यात् साधारणरूपत्वाच्च प्रथमस्य। एवञ्च प्रथमत एव सामादिधर्मा नेया इति सिद्धम्। स्मार्तोऽयं व्रात्यस्तोमो यद्युपनयननिमित्तं यदि वाऽध्ययननिमित्तमुभयथाऽप्यग्निर्लौकिक एवाऽवकीर्णिनिषादस्थपतिवत्, तत्राऽनुपनीतब्रह्मचारिणोराधानानधिकारात्। इतरथाऽवकीर्णिनोऽप्याधानापद्येत। यदि च ताण्ड्यतुल्यचतुर्विधव्रात्यस्तोमविधायकप्रकरणगतमित्युच्यते तर्हि कर्मभेदाभावात् ताण्ड्यसमाम्नातप्रथमव्रात्यस्तोम एव पुरुषभेदेन निमित्तान्तरे विहितो भवति। तत्रापि न तिर्यगुष्णीषादिव्रात्यधनसम्पादनं न वाऽऽधानं न वा गणयज्ञत्वमित्यादिकर्मान्तरं कल्पयदेव। अथ यदि व्रात्यस्तोमो व्रात्यतापरिहाराय विहितस्तर्हि तत्राऽधिकारिभूतानां व्रात्यानां नानात्वात्। ये तावदाहिताग्नयः कृताग्निष्टोमास्तेषां व्रात्यानां समुचितमेवाऽनुष्ठानम्। ये तावदाहिताग्नयोऽपि नैव कृतज्योतिष्टोमाः, ये चाऽनाहिताग्नय एव गृहिणस्सस्त्रीकाः, ये चाऽऽहिताग्नयोऽपि पूर्वं पश्चाद्विधुराः, ये चाऽविवाहिता एव स्नातकाः, ये च ब्रह्मचारिणो, ये चानुपनीताः तेषां व्रात्यस्तोमानुष्ठानं कथं भवति 'एष वा प्रथमो यज्ञो यज्ञानां यो ज्योतिष्टोम' इति वचनेन विना ज्योतिष्टोमानुष्ठानं यागान्तरेऽनधिकारात्। ज्योतिष्टोमे च—'अर्थी समर्थो विद्वान् शास्त्रेणानपहतश्च य'। इति वचनेन व्रात्यस्य सम्भाषणभोजनयाजनादौ निषिद्धस्य विना प्रायश्चित्तमसङ्ग्राह्यत्वात्। अधिकाराभावात् कथं व्रात्यस्तोमानु-

ष्ठानमिति चेदत्रोच्यते-ताण्ड्यब्राह्मणविहितो व्रात्यस्तोमः सोमयागः, विद्याग्न्याद्याक्षेपकत्वाभावात् सिद्धविद्याग्निं कृतप्रथमयज्ञं त्रयस्त्रिंशद्गणं परिगृह्य चरितार्थो भवति, इतरांस्तु नैव परिगृण्हाति, अन्यत एवं चारितार्थ्यात्। अन्येषां तु प्रायश्चित्तं नेद भवितुमर्हति प्रथमयज्ञादीनां यथायोगाभावात्, व्रात्यस्तोमस्यान्यतश्चरितार्थस्य तदाक्षेपकत्वसामर्थ्याभावात्। तस्मादन्येषां स्मृतिविहितमन्यदेव प्रायश्चित्तं व्रात्यतायाः परिहाराय भवितुमर्हति। पतितसावित्रीकत्वलक्षणव्रात्यतायाः प्रायश्चित्तं पुनरापस्तम्बोक्तं वसिष्ठोक्तं वा। व्रात्यस्तोमस्तु वसिष्ठयाज्ञवल्क्यपरिगृहीतो वचनसार्थक्याय, अन्यथाऽनुपपत्त्या रथकाराधाननिषादस्थपतियज्ञावकीर्णिपशुवदनुष्ठेय एव। स च प्रागुक्तरीत्योपनयनाध्ययनाधिकारकारी। तत्र चाऽसम्भवतां व्रात्यधनत्रयस्त्रिंशद्गणाग्न्याधानादीनां लोप एव। अथ लाट्यायनेन 'व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय' इति स्पष्टमाधानस्यापूर्वस्य विधानादनुपनीतस्याप्याधानपूर्वकमेव व्रात्यस्तोमानुष्ठानमुचितमिति चेन्न, सूत्रमूलभूतताण्ड्यब्राह्मणेऽपूर्वाधानविधेरभावात् गणयज्ञस्थद्यापनात् तदन्यथानुपपत्त्या त्रयस्त्रिंशद्यजमानाग्नीनां सत्रवत्संमेलनाधद्यस्माभावात्सिद्धमग्निं समुपादाय संयोगविधिपरमेवेदं सूत्रं लक्षणयेत्यभ्युपेयम्। तथा च पृथग्विद्यमानानग्नीनेकत्राऽऽधाय संयोज्येति सूत्रार्थः सम्पन्नो भवति। इतरथा श्रुतिविरुद्धमेव सूत्रमिदमापद्येत। एवञ्च लौकिकाग्निष्वेवाऽवकीर्णिनिषादस्थपतिवद्व्रात्यस्तोमस्य स्मार्तस्य सावित्रीपतिते प्रवर्तनमुचितम्। आपस्तम्बवसिष्ठोक्तं प्रायश्चित्तं तु यथायोगं साक्षात्प्रातिनिधितो वा निर्विशङ्कं भवेदेवेति दिक्॥

अथाऽयं व्रात्यताप्रायश्चित्तविचारो विफलत्वादसङ्गतः, कलौ चातुर्वर्ण्यविभागाभावेन प्रायश्चित्तकारयितॄणां व्रात्यस्तोमादिक्रतुप्रवर्तकानामृत्विजामुपनेतॄणां द्विजानां ब्राह्मणादीनामभावेन प्रायश्चित्तानुष्ठानाप्रवृत्तेः॥

सौराष्ट्रावन्त्यभीराश्च शूद्रा अर्बुदमालवाः ।
व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥
सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम् ।
भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाऽब्रह्मवर्चसः ॥

इत्यादिवचनेन द्विजसामान्यविप्लवप्रत्ययात् ।

ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ ॥
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।

इति चन्द्रसूर्यवंशाविलयनिर्देशात् ।

अग्निहोत्रं च संन्यासं तावदेव समाचरेत् ।
यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ॥

इति कलिमध्ये वर्णविलयसूचनात् । एवं योऽयं पुरञ्जयनामा बार्हद्रथोऽन्त्यस्तस्य सुनिको नामाऽमात्यो भविष्यति, स चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतननामानमभिषेक्ष्यतीत्यादिना प्रद्योतपालकविशाखयूपजनकनन्दिवर्द्धनशिशुनागकाकार्णक्षेमधर्मक्षत्रौजोबिन्दुसाराऽजातशत्रुदर्भकोदयाजनन्दिवर्द्धनमहानन्दिपर्यन्तं परम्परां निरूप्य महानन्दिसुतश्च शूद्रागर्भोद्भवोऽतिलुब्धो महापद्मः परशुराम इवाऽखिलक्षत्रान्तकारी भविष्यति । ततः प्रभृति च शूद्रा भूमिपाला भविष्यन्तीति मागधवंशनिरासपूर्वकं क्रमेण शूद्राणामेवाग्रे भूपालत्वनिर्देशाच्च । एवञ्च नन्दोत्तरं त्रैवर्णिकसामान्यस्य शशशृङ्गकल्पत्वात् राजन्या एव न सन्तीति चेत्—अत्रोच्यते, कलौ कदापि न सर्वथा चातुर्वर्ण्यविलयः । केवल पुनस्त्रैवर्णिका व्रात्या भवेयुः तत्रापि कलेरन्ते बहवो व्रात्या आदौ परिमिता मध्ये च मध्यमविधा एव न तु सर्वथा ब्राह्मणादीनामभाव एव कल्प्यते ॥  ३

सम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः ।
भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥

वासुदेवस्यांशः सम्भलग्रामब्राह्मणप्रधानविष्णुयशसो गृहेषु अष्टगुणर्द्धिसमन्वितः कल्किरूपधरो जगत्यत्राऽवतीर्य सकलम्लेच्छदस्युदुष्टाचरणवतामशेषाणामविच्छिन्नशक्तिमाहात्म्यः क्षयं करिष्यति, स्वधर्मे चाऽशेषमेव संस्थापयिष्यतीति ब्राह्मणस्थितिप्रदर्शनात् ॥

एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ।
ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥

इति कलिमध्येऽन्त्ये च ब्राह्मणादिवर्णसिद्धवत्कारेण बलवतो भूपालकत्वकथनेन सर्वथा चातुर्वर्ण्यविलयायोगात् ॥

एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा ।
कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते ॥
कलौ तु बीजभूतास्तु केचित्तिष्ठन्ति वै मुने ।
यथैव देवापिपुरू साम्प्रतं समवस्थितौ ॥

इति देवापिपुरुवदेव केचनाऽन्येऽपि बीजभूताः सार्वभौमत्वरहिताः राजवंशप्रवर्तका भवेयुरिति निरूपणात् ॥

देवापिः पौरवो राजा मरुश्चेक्ष्वाकुवंशजः ।
महायोगबलोपेतौ कलापग्रामसंस्थितौ ॥
कृते युग इहागत्य क्षत्रप्रावर्तकौ हि तौ ।
भविष्यतो मनोर्वंशबीजभूतौ महाबली ॥
देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः ।
कलापग्राम आसाते महायोगबलान्वितौ ॥
ताविहेत्य कलेरन्ते वासुदेवानुशिक्षितौ ।
वर्णाश्रमयुतं धर्मं पूर्ववत्प्रथयिष्यतः ॥

इति धर्मप्रवर्तकत्वकथनेपि इत्यान्तरव्यावर्तनाकथनात्

एष तूद्देशतो वंशस्तवोक्तो भूभुजां मया ।
निखिलो गदितुं नैव शक्यो जन्मशतैरपि ॥

इति सूर्यसोमवंशबाहुल्यनिर्देशेन सार्वभौमवंशयोरिक्ष्वाकुवंशैकदेशभूतबृहद्बलवंशैकदेशस्य सुमित्रान्तस्य सोमवंशैकदेशभूतपरीक्षिद्वंशैकदेशस्य क्षेमकशिरस्कस्य विलयकथनेऽपि वंशान्तराणां विलयाकथनात् । मागधवंशेऽपि बार्हद्रथवंशैकदेशजरासन्धवंशैकदेशस्य पुरञ्जयान्तस्य सुनिकामात्यकृतराज्यापहारस्य पुरञ्जयवधपूर्वकस्य च निर्देशेऽपि तद्वंशसामान्यविलयानिर्देशात् । नन्दप्रभृति शूद्रा भूमिपाला भविष्यन्तीति मगधदेशावलम्बेन सार्वभौमविभेदानामेव शूद्रादिभेदेन निर्देशेन क्षत्रसामान्यस्य पृथिव्यामसत्त्वाप्रतिपादनात् । महापद्मः परशुराम इव सकलक्षत्रान्तकारी भविष्यतीति वचसोऽपि राज्याभिषिक्तत्तत्क्षत्रान्तपरत्वेन क्षत्रजातिसामान्याभावपरत्वस्य परशुरामदृष्टान्तेन ब्रह्मविट्क्षत्रेत्यादिनिरुक्तवचनादिना च वक्तुमशक्यत्वात् । यवनादीनामपि ततः शकाः षोडश भूपतयो भवितार इत्यादिना सार्वभौमत्वायोगात् । ब्रह्मविट्क्षत्रेत्यादिवचनेन खण्डितभूपातित्वेन क्षत्रादीनामपि विनिर्देशात् । अनन्तरञ्चाऽशेषकलेरवसाने निशावसान इव प्रबुद्धानां तेषामेव जनपदानाममलस्फाटिकशुद्धा मतयो भविष्यन्ति । अनन्तर तेषामेव बीजभूतानामशेषमनुष्याणां परिणतानामपि तत्कालकृतानामपत्यप्रसूतिर्भविष्यतीति तानि च तदपत्यानि कृतयुगधर्मानुसारिण्येव भविष्यन्ति ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।
वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् ॥
पौरजानपदानां वै हतेष्वखिलदस्युषु ।
तेषां प्रजानिसर्गश्च स्थविष्ठ संभविष्यति ॥

इति कल्पान्तस्थपौरजानपदजनानामेव कृतयुगगतब्राह्मणादिस-

फलवर्णबीजभूतत्वेन निर्देशेन कलौ सर्वथा चातुर्वर्ण्यं नेति पक्षतु-मशक्यत्वात् ॥

अचन्द्रार्कग्रहा भूमिर्भवेदपि न संशयः ।
अपौरवा न तु मही भविष्यति कदाचन ॥

इति स्पष्टमेव सर्वदा पौरवाणां भूमाववस्थानकथनाच्च । एवञ्च कलौ क्षत्रसत्त्वं नियतमेव । एवञ्च चातुर्वर्ण्याभावनिरूपणं कलाव-सङ्गतमेव ॥

ननु—

देवापिः पौरवो राजा मरुश्चेक्ष्वाकुवंशजः ।
कृते युग इहागत्य क्षत्रधर्मप्रवर्तकौ ॥

इति निर्देशनाऽचन्द्रार्कग्रहेति वाक्यं देवापिपरमेव भवतु, न तु तदतिरिक्तक्षत्रसामान्यपरमिति चेदत्रोच्यते । हरिवंशे षडशीतितमे-ऽध्याये—

जनमेजयस्य के पुत्राः पठ्यन्ते लोमहर्षण ।
कस्मिन् प्रतिष्ठितो वंशः पाण्डवानां महात्मनाम् ॥

इति शौनकीये जनमेजयस्य शतानीकादिक्षेमकान्ता परम्परा नश्यत्येवाऽन्ते तथा न नश्यति कलौ सर्वदा तिष्ठत्येवेत्येवंरूपपरम्परा-परे प्रश्ने सौतेरुत्तरम्—

पारिक्षितस्य काश्यां तु द्वौ पुत्रौ सम्बभूवतुः ।
चन्द्रापीडश्च नृपतिः सूर्यापीडश्च मोक्षवित् ॥
चन्द्रापीडस्य पुत्राणां शतमुत्तमधन्विनाम् ।
जानमेजयमित्येवं क्षात्रं भुवि परिश्रुतम् ॥
तेषां ज्येष्ठस्तु राजासीत्पुरे वारणसाह्वये ।
सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः ॥
सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान् ।
स पुत्रः स तु धर्मात्मा प्रविवेश तपोवनम् ॥

तस्माद्वनगताद्गर्भं यादवी प्रत्यपद्यत ।
सुचारुदुहिता सुभ्रूर्मालिनी मातृमालिनी ॥
सत्वजन्मनि गर्भस्य श्वेतकर्णः प्रजेश्वरः ।
अन्वगच्छद्व्रतं पूर्वैर्महाप्रस्थानमच्युतम् ॥
सा दृष्ट्वा सम्प्रयातं तं मालिनी पृष्ठतोऽन्वयात् ।
पथि सा सुषुवे सुभ्रूर्वने राजीवलोचनम् ॥
कुमारं सम्परित्यज्य भर्तारं साऽन्वगच्छत ।
पतिव्रता महाभागा द्रौपदीव पुरा पतीन् ॥
सुकुमारः कुमारोऽसौ गिरिकुञ्जे रुरोद ह ।
पुण्यर्थं तस्य मेघास्तु प्रादुरासन् महात्मनः ॥
अविष्टायास्तु पुत्रौ द्वौ पैप्पल्यादिश्च कौशिकः ।
दृष्ट्वा कृपान्वितौ गृह्य तं प्रक्षालयतां जले ॥
निघृष्टौ तस्य तौ पार्श्वौ शिलाया रुधिरस्रवौ ।
अजश्यामो तु पार्श्वौ तावुभावपि समाहितौ ॥
तथैव च समारूढावजपार्श्वस्ततोऽभवत् ।
ततोऽजपार्श्व इति तौ चक्राते नाम तस्य ह ॥
स तु वेमकशालायां द्विजाभ्यां परिवर्द्धितः ।
वेमकस्य तु भार्या तमुद्वहत् पुत्रकारणात् ॥
वेमक्याः स तु पुत्रोऽभूत् ब्राह्मणौ सचिवौ च तौ ।
तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः ॥
स एव पौरवो वंशः पाण्डवानां प्रतिष्ठितः ।
श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना ॥
जरासङ्क्रमणे पूर्वं भृशं प्रीतेन धीमता ।
अचन्द्रार्कग्रहा भूमिर्भवेदपि न संशयः ॥
अपौरवा न तु मही भविष्यति कदाचन ।

इति जनमेजयस्य प्रपौत्रश्वेतकर्णपुत्रमजपार्श्वं परिगृह्य तत्स-

न्तानस्थैर्यपरत्वेनाऽऽचन्द्रार्कमद्य भूमिरिति श्लोकप्रवर्तनेन केवलदेवापिमाद्ययोरेव पर्यवसानायोगात्। अतोऽन्येऽपि बहवो राजानो बीजभूताः कलावाद्यो मध्येऽन्ये च सन्त्येव। अपि च राज्याभिषिक्तयोर्द्वयोरेव क्षेमकसुमित्रयोर्वंशविलयकथनेन राज्यानभिषिक्तानां तत्परम्पराभवानां क्षत्रियाणां वंशविनाशाकथनेन यथायोगं तेषां कलावपि सन्तत्यनुवर्तन घटत एव। न हि पाण्ड्यादिनिखिलराजवंशानां निरन्वयो विनाशः क्वाऽप्याम्नातः। ब्रह्मसूत्रमेव विप्रत्वे हेतुः, लिङ्गधारणमेवाश्रमे हेतुरित्यादिनिन्दावादाः कलिपराः प्रायेणाऽधर्मप्रवृत्तिपरा न तु ब्राह्मणाश्रमादिसामान्याद्यभावपराः प्रागुक्तप्रमाणैर्वर्णाश्रमाणां बीजभूततया सत्त्वाभ्युपगमात्॥

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरः।
तस्माद्भारतमाख्यानं कृपया मुनिना कृतम्॥

इति श्रूयते। अत्र द्विजबन्धुपदमनुपनीतव्रात्यपरं, न तु वेदानध्ययनप्रयुक्तव्रात्यतापरम्। उपनीतमात्रस्य वेदश्रवणेऽधिकारमन्तरा तदध्ययनायोगात्। अत एव छान्दोग्ये-'नानूच्य ब्रह्मबन्धुरिव भवती'ति वेदानध्ययने ब्रह्मबन्धुसदृशो भवतीति कथनेन ब्रह्मबन्धुपदमनुपनीतव्रात्यपरमिति स्पष्टीकृतम्। एवञ्च शूद्राश्च द्विजबन्धुश्च शूद्रद्विजबन्धवः, स्त्रियश्च शूद्रद्विजबन्धवश्च स्त्रीशूद्रद्विजबन्धवः। अत्र शूद्रपदं जातिपरं, तेन शूद्रायाः शूद्रस्य च ग्रहणं भवति। द्विजबन्धुपदं तु केवलपुरुषपरमेव॥

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।

इति वचनेन त्रैवर्णिककन्यानां त्रैवर्णिकपुरुषवदेवोपनयनाध्ययनाधिकारसत्त्वेपि त्रैवर्णिककन्यानां मौञ्जीबन्धनाध्ययनाभावकल्पस्यापि सर्वकल्पसूत्रकारसंमतत्वेनोपनयनाद्यभावे पुरुषवद्व्रात्यत्वेन द्विजबन्धुत्वाभावात्। अत्र स्त्रीपदं न स्त्रीसामान्यपरं, किन्तु शूद्रद्विजबन्धुविवाहितस्त्रीपरं सन्निधानात्। न तु त्रैवर्णिकविवाहितत्रैवर्णि-

कश्चीपरं तासां वैदिकैरेव मन्त्रैरुद्वाहात् बृहस्पतिसववाजपेयराजसूयज्योतिष्टोमादिक्रतुष्वप्यधिकारात् 'पत्नीं वाचयती'त्यादिश्रवणात्। उच्चैरुच्चार्यमाणवेदमन्त्रश्रवणस्य कर्मसु तासां दर्शनात्। सन्ततमपि पुत्रशिष्यादिघुष्यमाणवेदश्रवणस्य सर्वसम्मतत्वात् वैवाहिकाग्निसंयोजनवियोजनयोः कर्माधिकारस्य च साहित्येन दर्शनाच्च। तत्र त्रैवर्णिककन्या द्विविधा सोपनयनाध्ययना तद्रहिता चेति।

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।

पुराकल्पः परकृतिरर्थवादभेदः, तत्र पुराकल्पोऽर्थवादविशेषः, न तु प्राचीनकल्पस्तथैव पूर्वमीमांसासिद्धान्तात्। एतस्मिन्वचने स्पष्टमेव त्रैवर्णिककन्यानामुपनयनादिविधानात् कल्पसूत्रेषु सर्वेष्वपि जातकर्मादीन्यमन्त्रकमेवाऽऽम्नायोपनयनाऽनाम्नानात् सोपनयनाध्यना तु पुरुषवदेव। यथा गार्गी मैत्रेयी च। पक्षे निरुपनयनाध्ययनात्त्रैवर्णिकी, तस्या विवाह एवोपनयनस्थाने भवति। अत एव पूर्वाह्ने शुक्ले पक्षे इत्यादिवचनं तच्चक्षुरिति सूर्योपस्थानं, आधुवदर्शनं प्रतीक्षाते कथनं च सङ्गतं भवति। राज्यादिविवाहोऽत्रैवर्णिकपरः। अयञ्चाऽपरो विशेषः–त्रैवर्णिकपुरुषस्य कालानुपनयने व्रात्यताकन्यायास्तु न व्रात्यता, उपनयनाभावपक्षस्योपि मानसिद्धत्वात्तदतिक्रमप्रयुक्तव्रात्यताया वक्तुमशक्यत्वादिति। तत्र व्रात्यस्य पुत्रो व्रात्यो भवति कालातिक्रमे सर्वस्मृतिष्वपि कालातिक्रमं पुरस्कृत्यैव व्रात्यतानिर्देशात्। कालातिक्रममायत्तैव व्रात्यता, कालानतिक्रमे तु स्वयमव्रात्यो व्रात्यपुत्रस्तत्प्रयुक्तं प्रायश्चित्तं तेन विधेयं भवति। अथ व्रात्यपुत्रः कालानतिक्रमे विनाप्रायश्चित्तमुपनयनाधिकारी भवतु। व्रात्यपुत्रत्वेन पृथक् प्रायश्चित्ताकथनादिति चेत् न, 'ततो यो निर्वर्तेत तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत ऊर्ध्वं प्रकृतिवत्' इत्यापस्तम्बनिर्देशेन व्रात्यतापन्नपुरुषपुत्र एव प्रकृतिपरस्तस्ततः

सं विषया । पृ०
५३ राज्ञा पापविशेषे वधदण्डे क्रियमाणे मृतस्याशौच वर्तत एवेति कथनम् । (शु०) १०४
५४ महापातकादिपापाचरणेन पतितस्य मरणे बलावदानप्रत्यसन्न्यासिपाखण्ड्यादिमरणे च नाशौचम् । (शु०) १०४
५५ "नृपहतानामाशौचाभावो युद्धहतव्यतिरिक्तविषय" इति प्राचां मतकथनं, तत्खण्डनम् । (शु०) १०५
५६ "युद्धहतस्याऽन्वश्मेवाशौचम्" इति हरदत्तमतकथनम् । (शु०) १०५
५७ युद्धकालीनप्रहारेण कालान्तरे मृते एकरात्रमाशौचम् । (शु०) १०५
५८ मध्येयुद्ध हतस्य तु सद्य शौचम् । (शु०) १०५
५९ युद्धात् पलायनसमये अवाङ्मुखस्य हतस्य त्रिरात्रमाशौचम् । (शु०) १०५
६० "राज्ञा क्रोधमन्तरेण प्रमादाद्युत क्रोधेनाऽपि युद्धहतस्तदा सपिण्डानां समग्रमेवाऽऽशौचम्" इतिहारलतामतखण्डनम् । (शु०) १०५
६१ कामतो दुर्मृतानां दाहाशौचादिनिषेधोऽनाहिताग्निविषय इति शङ्का, तत्समाधानम् । आहिताग्निपुरुषमरणे तदौर्ध्वदेहिकप्रकारकथनं च । १०५–१०६
६२ आत्मघातादिना दुर्मृतस्याहिताग्ने शरीरं गङ्गादिपुण्यनदीतोये प्रक्षिप्य तदीयं वैतानं चाप्सु प्रक्षिप्य आवसथ्यं च चतुष्पथे प्रक्षिप्य सम्वत्सरानन्तरमुदकदानादिकामेवौर्ध्वदेहिकक्रिया कुर्यात् । अथ वा तदैव लौकिकाग्निना त दग्ध्वा तदस्थीनि क्षीरादिना प्रक्षाल्य सम्वत्सरान्ते मृताग्निहोत्रेण रक्षितैरग्निभिर्विधिवद्दाहं विधाय सर्वमौर्ध्वदेहिकं कुर्यात् । (शु०) १०७
६३ अत्र पक्षद्वयेऽपि आघातप्रायश्चित्तं प्रेतशुद्ध्यर्थं नारायणबलिं कृत्वैवौर्ध्वदेहिक कार्यम् । (शु०) १०७
६४ कुत्र कुत्र प्रयोगे क क प्रारम्भस्तत्कथनम् । १०७
६५ ज्योतिष्टोमादियज्ञादौ ऋत्विग्वरणं प्रारम्भस्तस्मिन् कृते, अनन्तव्रतादिव्रतादौ गवामयनादिसत्रादौ सङ्कल्प प्रारम्भस्तस्मिन् कृते, विवाहादौ नान्दीमुखपितृगणश्राद्धमारम्भस्तस्मिन् कृते, श्राद्धे पाकसम्पत्ति प्रारम्भस्तस्मिन् कृते, श्राद्धे विप्रनिमन्त्रणं वा प्रारम्भस्तस्मिन् कृते आशौचपाते तत्र साङ्गे कर्मणि नाशौचम् । आशौचसम्भावनायां यज्ञप्रारम्भ एकविंशतिदिनानि विवाहे दश उपनयने षट् चोले त्रीणि दिनानि च पूर्वं प्रारम्भ कर्तुं शक्यते । (शु०) १०८
६६ श्राद्धे पूर्वेद्युर्निमन्त्रणे स एव प्रारम्भ सद्योनिमन्त्रणे तु पाकपरिक्रिया प्रारम्भ । (शु०) १०९

सं विषया । पृ०

६७ ज्ञातिमरणे ब्रह्मचारिणामाशौचं नास्ति । अत एव ज्ञातिभ्यस्तिलोदकं ब्रह्मचारिभिर्न देयम् । १०९

६८ ब्रह्मचारी समावर्त्तनपर्यन्तं मातापितृभ्यतिरिक्तज्ञातिमरणे नाशौचभाक् । समावर्त्तनाऽनन्तरं त्रिरात्रमशुचिर्भूत्वोदकं कुर्यात् । (शु०) १०९

६९ मातापितृमरणे ब्रह्मचारिणामाशौचमस्त्येव । ब्रह्मचारिभिश्च मातापितृभ्यां तिलोदकादि देयमेव । ११०

७० मातापित्राचार्योपाध्यायगुरुमरणे तदाशौचं कर्त्रन्तराभावे तदौर्ध्वदैहिकक्रिया च ब्रह्मचारिणा कार्या । मात्रादीनां शवकर्मकरणे ब्रह्मचर्यलोपो न भवति । (शु०) ११०

७१ उपकुर्वाणकानां समावर्त्तनानन्तरं दिनत्रयमाशौचम् । समावर्त्तनपर्यन्तं च मात्रादिव्यतिरिक्तज्ञातिमरणे नाशौचम् । मात्रादिमरणे त्वाशौचं वर्त्तत एव । परं तु तत्राऽपि आशौचिभिः सहशयनासनभोजनानि तत्सम्पर्कं च न कुर्यात् ब्रह्मचारी । (शु०) १११

७२ नैष्ठिकानां पित्रादिपितृमेधाचरणे तावत्कालमाशौचमित्येकः पक्षः । एकाहाशौचमिति द्वितीयः । त्र्यहाशौचमिति तृतीयः । तदेषां पक्षाणां देशकालाद्यपेक्षया व्यवस्था । (शु०) १११

७३ स्वाचाराद्भ्रष्टाः पतिताः दूषिताश्च उदकादिकं न कुर्युः तेषां मरणे अन्यैश्च तेभ्यो नोदकं देयम् । १११

७४ स्वाचाराद्भ्रष्टाः पतिताः क्लीबाः गर्भभर्तृद्रुहो योषितः संस्कारहीना व्रात्याः एते प्रमीतेभ्यः सपिण्डेभ्यः उदकं न दद्युः तेभ्यश्च मृतेभ्योऽन्ये सपिण्डा उदकं न दद्युः । (शु०) ११२

७५ येषां चोदकादि न कार्यं यैश्चोदकं न कार्यं तेषां निरूपणम् । (शु०) ११२

७६ अस्नानभोजनहोमविवर्जितनास्तिकादीनां मरणपर्यन्तमाशौचम् । ११३

७७ अस्नानभोजनादीनां मरणपर्यन्तमाशौचबोधनं निन्दार्थम् । (शु०) ११४

७८ नामधारकविप्रलक्षणम् । (शु०) ११४

७९ टीकाकर्तृवंशादिपरिचयः । (शु०) ११४

८० लोकप्रार्थना । (शु०) ११४

८१ ग्रन्थसमर्पणम् । (शु०) ११४

८२ ग्रन्थसमाप्तिः । (शु०) ११४

समाप्ता शुद्धिचन्द्रिकासहितषडशीत्यां निरूपितानां विषयाणां सूची ।

॥ श्रीगुरु शरणम् ॥

॥ षडशीतिः ॥

# शुद्धिचन्द्रिका ।

---

अमन्दमदनिस्यन्दगण्डमण्डलमन्वहम् ।
विघ्नान्धकारमार्तण्डं वक्रतुण्डमुपास्महे ॥ १ ॥
धर्माधिकारिपदभूषितवंशरत्न-
श्रीरामपण्डितसुतेन विनायकेन ॥
आशौचसङ्ग्रहकृतिः षडशीतिपद्या
व्याख्यायतेऽतिशयवद्विपयानवद्या ॥ २ ॥

इह खलु नित्यनैमित्तिकादिसकलकर्माधिकारपरिपन्थ्याशौचं निर्णेतुमादावित्याचार्यः प्रतिजानीते—

अथानेकर्षिवाक्यानि सङ्गृह्यादाय केवलम् ॥
शङ्खप-कौशिकादिभ्यो लिखत्याशौचनिर्णयम् ॥ १ ॥

अथेति । अथशब्देन प्रशस्तशब्दनिर्देशरूपं मङ्गलमाचरितम् । यद्वा 'उपनीय(१) शौचाऽऽचारान् शिक्षयेत्' इत्यनेन उपनयनानन्तरं सप्रकाराणां सापवादानां शौचाचाराणां विशेषस्योपदेशाच्छौचापवादरूपस्याऽऽशौचस्य निर्णय उपनयनानन्तरं भावीति सूचयितुमथशब्दः । ततश्च अथ उपनयनानन्तरकर्तव्यमाशौचनिर्णयं लिखामीति सम्बन्धः । चिकीर्षितस्याशौचनिर्णयस्य स्वोत्प्रेक्षामात्रमूलत्वशङ्कामपाकर्तुमाह— अनेकेति । अनेके च ते ऋषयश्च मन्वादयः तेषां वाक्यानि, अनेकानि च तानि ऋषिवाक्यानीति वा । असकृताऽभिधायिपदाद्यनुगम्

---

१ "उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्" । ( या० १-१५ ) इत्यनेनेत्यर्थः ।

लयति–सङ्ख्ययेति । ( सङ्ख्यया ) प्रसङ्गादिलक्षणया । आदाय तत्तत्संहिताभ्यः । अथोद्धृत्य ( सङ्ग्रथ्य ) अनेकप्रकरणविप्रकीर्णान्येकत्र सङ्कलय्य । (कौशिकगोत्र आदित्याचार्यः) ( केवलम् ) प्रेतक्रियादिनिर्णयरहितम् । ( आशौचनिर्णयम् ) आशौचस्य निर्णयं लिखति । तत्राशौचशब्दः भावाधिकारे "हायनान्तयुवादिभ्योऽण्" ( पा० सू० ५–१–१३० ) इत्यतोऽणोऽनुवृत्तौ "इगन्ताच्च लघुपूर्वात्" ( पा० सू० ५–१–१३१ ) इत्यनेन शुचिशब्दादणि कृते ततो नञा समासे "नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" ( पा० सू० ७–३–३० ) इत्यनेन वैकल्पिकपूर्वपदवृद्ध्या निष्पद्यते । इतरथा अशौचमिति । इदमत्र विचार्यते किमिदमाशौचं नामेति । तत्र शौचाभावो ह्याशौचम्, शौचं पुनः पापक्षयो धर्मयोग्यत्वं वा । तदुभयमप्यदृष्टरूपमेवेति वार्तिककृतः । तत्र पापक्षयः शौचं तदभावस्त्वाशौचमिति पर्यवस्यति । तच्चायुक्तम् । पापलक्षणाभावात् । तथाहि–"चोदनालक्षणोऽर्थो धर्मः" ( जै० अ० १ पा० १ अ० २ ) इत्यस्मिन् सूत्रे धर्मलक्षणं कुर्वता जैमिनिना चोदनालक्षणोऽर्थो धर्मः, अनर्थः अधर्म इत्यधर्मलक्षणमपि सूचितम् । अनर्थश्चानिष्टसाधनम् । यथोक्तं भाष्यकृता—"कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय" इति । पापाधर्मौ च पर्यायौ । तथा चास्यानिष्टसाधनताबोधकचोदनाऽभावान्नाभावधर्मरूपतेति । येऽपि दुःखासाधारणकारणमधर्म इति अधर्मलक्षणमाहुः तेषामप्याशौचस्याधर्मत्वं न सिध्यति । दुःखहेतुत्वाभावात् । यत्तु "विहिताकरणप्रतिषिद्धसेवनाभ्यां पापोत्पत्तिः न चाशौचिनां तदन्यतरदस्ति । न च विहितपञ्चयज्ञाद्यकरणमस्तीति वाच्यम् । तेषां "पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः" इत्यनेन पर्युदस्तत्वात् । तस्मादुत्पादकाभावान्न पापमाशौचम्" इति । तन्न । ऐहिकतदुभयाभावेऽपि जन्मान्तरीयतदन्यतरकल्पनासम्भवात् । यथा मिथ्याभिशापादिदर्शने तज्जनकदुरितोत्पादकं जन्मान्तरीयं निषिद्धाचरणादिकं कल्प्यते; एवमिहापि सपिण्डजननादिदर्शनेनाशौचरूपपापोत्पादकं जन्मान्तरीयं निषिद्धाचरणादिकं कल्पयितुं शक्यत इति न विशेषः । न च, विहिताकरणाद्युत्पन्नपापजन्यं मिथ्याभिशापादिकं स्वकारणकारणं विहिताकरणादिकमनुमापयितुमलम्, सपिण्डजननादिकं पापरूपाशौचस्य तदजनकत्वात्कथं तज्जनकविहिताकरणाद्यनुमापकमिति वाच्यम् । ग्रहदौःस्थ्यस्येव पापाजन्यस्यापि तस्य तदनुमापकत्वसम्भवात् । न च जन्मान्तरीयकारणोत्पन्नपापरूपाशौचस्य जननादिप्राक्कालेऽपि सत्त्वात्सर्वदैव कर्मप्रतिबन्धः स्यादिति वाच्यम् । निश्चितस्यै-

च तस्य कर्मप्रतिबन्धकत्वात् । तन्निश्चयश्च जननादिनिमित्तनिश्चयादिति च वक्ष्यते । तस्मादुक्तपूर्वपरिहारोऽत्र ज्यायानिति । अथ मतं, कर्माधिकारः शुद्धिः, तद्विपर्ययश्चाशुद्धिरिति । तन्न । ( तथा सति ) "आशौचे दानप्रतिग्रहस्वाध्याया निवर्त्तन्ते" इत्यादौ आशौचकर्मानधिकारयोरुद्देश्यविधेयभावो न स्यात् । तस्य भेदार्थत्वात् । उद्देश्यता चास्य ' म्रियते जुहोति " इतिवन्निमित्तत्वेनानुपादेयत्वादेव सिद्धा । न चाशौचस्याप्रसिद्धत्वेनोद्देश्यत्वासम्भवात् ' यूपं तक्षति " इत्यत्रेव वचनव्यक्तिवैपरीत्यात् दानाद्यनधिकार एवाशौचमिति वाच्यम् ।

"दशाहं शावमाशौचं सपिण्डेषु विधीयते" ( मनु० ५-५९ )

इत्यादिवाक्यान्तरप्रमिताशौचानुवादेन तदनधिकारबोधनात् ।

किञ्च कर्मानधिकार एवाशौचं सपिण्डेरिति वदन् प्रष्टव्यः किं कर्ममात्रानधिकारः कर्मविशेषानधिकारो वा ? । नाद्यः । आशौचिनामप्युदकदानाद्यधिकारात् । न परः । ब्राह्मणादेः राजसूयाद्यनधिकारेण आशौचित्वप्रसङ्गात् ।

अपि च यदि दानाद्यनधिकार एवाशौचम्, तर्हि पिण्डोदकदानाद्यधिकारोऽप्याशौचं स्यात् । न चेष्टापत्तिः । अनेकशक्तिकल्पनाप्रसङ्गात् । तस्मान्न कर्मानधिकार आशौचमिति ।

एतेन "विहितप्रातिस्विकयावत्कर्मार्हताप्रयोजको धर्मविशेषः शुद्धिस्तद्भिन्नलक्षणा चाशुद्धिः" इत्यपि लक्षणं परास्तम् । तद्भिन्नलक्षणस्याशक्यनिरूपणत्वात् । तथाहि । किं तादृशधर्मभिन्नत्वं तद्भिन्नलक्षणम् ? उत तदभाव इति । नाद्यः । तादृशधर्मभेदस्य पुरुषे मार्गादिपरत्वेन सर्वदैवाशुचित्वापातात् । नान्त्यः । उक्तधर्मविशेषाभावापेक्षया पिण्डोदकदानाद्यधिकारापादकधर्मविशेषस्य लघुत्वात् ।

यत्तु "अम्लादिसंयोगप्रयोज्यस्ताम्रादौ तत्तद्देवतासन्निधिरेव शुद्धिः, अस्पृश्यसम्बन्धप्रयोज्यस्तत्तद्देवतासन्निध्यभावश्चाशुद्धिः" इति तार्किकलक्षणम् । तदपि न प्रकृतोपयोगि । अचेतनेषु तत्सम्भवेऽपि चेतनेषु यावज्जीवं तदसम्भवात् । तदुक्तम्—

'जीवन् जन्तुर्भवेद्यावत्तावत्तदभिमानिनी ।
देवता वर्तते तत्र गृहे तस्मिन्निवर्तते ॥ इति ।

अत्राहुः—कालस्नानाद्यपनोद्य पिण्डोदकदानादिविधिहेतुभूतोऽध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतोऽतिशयः कश्चिदाशौचमिति ।

न च सूतिकाया मासाद्याशौचे अव्याप्तिः, तत्रान्ते स्नानाभावादिति वाच्यम्। "सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेत्" इति पैठीनसिना तत्राप्यन्ते स्नानविधानात्। यद्वा तत्राप्याशौचं दशरात्रमेव। –

"सूतिका सर्ववर्णानां दशरात्रेण शुध्यति"।

इतिवचनात्। कर्मानधिकारमात्रं तु तावत्कालम्। आशौचकर्मानधिकारयोश्च स्पष्टभेदत्वादिति।

अस्य च कुलव्यापित्वे कारणमाह हारीतः–"प्रेताभिभूतत्वाच्छावमाशौचं जीवे वृद्धियोगेन कुलस्य भवति" इति। जायमानम्रियमाणयोः सम्बन्धिनां सन्तोषदासन्तोषदाभ्यां(?) वृद्धिक्षययोगाद्वा कुलव्याप्याशौचं भवतीत्यर्थः। अत्रेदं चिन्तनीयम्–किमिदं ज्ञातं कर्माधिकारापवादकम्? उत स्वरूपसदिति? तत्र स्वरूपसदिति प्राप्तम्।

जनने मरणे नित्यमाशौचमनुधावति।
सपिण्डांश्चैव बन्धूंश्च यत्र क्वचन गच्छति॥

इति देवलवचनात्।

अनभिमत उत्क्रान्तेः सार्धं संस्कारकर्मणः।
शुद्धिः सञ्चयन दाहान्मृताहस्तु यथाविधि॥

इत्यङ्गिरोवचनाच्च। अत्र च वचनद्वयेऽपि ज्ञाननिरपेक्षस्योत्पत्तिमात्रस्याशौचस्य सपिण्डाभिभावकत्वप्रतिपादनात्स्वरूपसत एव निमित्तत्वमिति प्राप्तेऽभिधीयते–'ज्ञानमेव निमित्तम्' इति।

उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत्।
एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत्॥

इतिषट्त्रिंशन्मते सूतकज्ञानाऽज्ञानाभ्यामेव दोषसदसद्भावबोधनात्।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः। (मनु० ५–७७)

इत्यादिलिङ्गदर्शनात्। तस्माज्ज्ञातमेवाशौचं कर्मानधिकारापादकमित्यलं विस्तरेण॥ १॥

इदानीं निरूप्यमाणस्याशौचस्य निमित्तकृतं कालकृतञ्चावान्तरभेदमाह–

आशौचं द्विविधं प्रोक्तं सूतकं मृतकं तथा॥
अल्पं चैवाधिकं चेति तत्पुनर्द्विविधं स्मृतम्॥ २॥

आशौचमिति। पूर्वोक्तलक्षणमाशौचं द्विविधं द्विप्रकारं प्रोक्तम्। सूतिनिमित्तं सूतकम्, मृतिनिमित्तं मृतकं चेति। तद्विविधमपि पुनः प्रत्येकमल्पाधिककालसम्बन्धादल्पमधिकं चेति स्मृतम्। तदुक्तम्—

"आशौचं द्विविधं प्रोक्तं जातकं मृतकं तथा" । इति ॥ २ ॥

प्रतिज्ञातं सूतकभेदमुदाहरति—

पुत्रीसूतौ गृहे गर्भपाते चाल्पं तु कालतः ॥

तदन्यदधिकं जातं जातिभेदात्तु तन्मतम् ॥ ३ ॥

पुत्रीति। पितृगृहे पुत्रीप्रसवे पत्न्यादिगर्भपाते च यज्जातं जननिमित्तमाशौचं पित्रादेस्तदल्पम्। वक्ष्यमाणाल्पकालसम्बन्धात्। पातशब्दः स्रावस्याप्युपलक्षणम्। चकारात्सोदकसगोत्रप्रसवनिमित्तं गृह्यते।

'जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते' । ( मनु० ५-७१ ) इतिमनुस्मरणात्।

'एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम्' इतिजाबालिस्मरणाच्च। तस्मात्पातादिनिमित्तादन्यत्कालजं पूर्णकालप्रसवनिमित्तं जातमधिकम्। दशाहादिकालसम्बन्धात्। तत्पुनर्ब्राह्मणत्वादिजातिभेदादप्यधिकं मतम्। पूर्वजात्यपेक्षयोत्तरोत्तरं जात्याशौचमधिकमित्यर्थः ॥ ३ ॥

सूतकभेदमुदाहृत्य मृतकभेदमुदाहरति—

श्रोत्रियाचार्यशिष्यर्त्विग्बन्धुगोत्रमृतौ मृतम् ॥

सगोत्रे निर्दशं चाल्पं महदन्यत्तु पूर्ववत् ॥ ४ ॥

श्रोत्रियाचार्येति। श्रुताध्ययनसम्पन्न एकग्रामवासी श्रोत्रियः। उपनीय वेदाध्यापयिता आचार्यः। शिष्योऽध्याप्यः, उपदिष्टमन्त्रो वा। ऋत्विक्=वृतो यज्ञकृत्। बन्धवः=आत्मपितृमातृबन्धवः। गोत्रः=सोदकः। स च सप्तमपुरुषानन्तरमा चतुर्दशात्।

'समानोदकभावस्तु निवर्तेताचतुर्दशात् ॥

इतिवृद्धमनुस्मरणात्। सप्तमपुरुषानन्तरमादशमात्। "ब्राह्मणानामेकपिण्डस्वधानामादशमात्" इति सुमन्तुस्मरणादित्यन्ये। जन्मनाम्नोरज्ञाने।

समानोदकभावस्तु जन्मनाम्नोरवेदने। ( मनु० ५-६० )

इतिमनुस्मरणादित्यपरे। परां स्मृतौ। सगोत्रश्चतुर्दशपुरुषानन्तरमैकविंशात्। अन्ये तु सप्तमपुरुषानन्तरं जन्मनामज्ञाने सोदकता, तदुत्तरं च तदज्ञाने सगोत्रता।

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
सपिण्डता ततः पश्चात्समानोदकधर्मता॥
ततः कालवशात्तत्र विस्मृतैर्जन्मनामभिः।
समानोदकसंज्ञाऽपि तावन्मात्राऽपि नश्यति॥

इतिब्रह्मपुराणादित्याहुः। तस्मिंश्च मृते निर्गतं दशभ्योऽहोरात्रेभ्य इति निर्देशं च तन्मृतं मरणाशौचम्। चकारादाचार्यपुत्रपत्न्यन्तेवासिमातुलमातुलानीमातामहमातामहीभगिनीभागिनेयमातृपितृभगिनीसब्रह्मचारिप्रभृतीनामाशौचमल्पम्। वक्ष्यमाणाल्पकालसम्बन्धात्। अन्यव्यतिरिक्तं सपिण्डाशौचं महत्। दशाहादिकालसम्बन्धात्। तदपि पुनः पूर्ववत्। जातिभेदाद्द्विविधमित्यर्थः॥ ४॥

ननु श्रोत्रियाद्याशौचवत्सपिण्डाशौचमपि पुरुषलङ्घ्याभेदेनाऽल्पमस्ति, यथाह पराशरः—

चतुर्थे दशरात्रं स्यात् षड् निशा पुंसि पञ्चमे।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात्। (परा० ३-९) इति।

"सप्तमे त्वहरेव तु" इति लघुहारीतश्च। तत्कथमत्र निर्णीतमित्यत आह—

यदेकमपि चाशौचं नरपर्यायभेदतः।
पूर्णमस्य परस्याल्पमितिभेदो न साम्प्रतः॥ ५॥

यदेकमिति। जननादिनिमित्तमेकमेवाशौचं नराणां पुरुषाणां पर्यायभेदतः संख्याभेदादेकस्य चतुर्थान्तस्य पूर्णं दशरात्रं, परस्य पञ्चमादेरल्पं षड्रात्रादिकमितिभेदो न साम्प्रतः। स्मृत्याचारविरोधात्। तथाहि—

दशाहं शावमाशौचं सपिण्डेषु विधीयते। (मनु० ५-५९)

इति मनुना सपिण्डेषु दशाहाशौचविधानात्, सपिण्डतायाश्च

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते [मनु० ५-६०]

इत्यनेन सप्तमपुरुषादर्वागनिवृत्तिबोधनात्, कथं पञ्चमादावनिवृत्ते सापिण्ड्ये षड्रात्राद्याशौचसम्भव इति।

ननु पिण्डनिवृत्तिः पञ्चमे सप्तमे वेति "त्रीनतीत्य मातृन-पञ्चातीत्य

पितृनः" इति गौतमपैठीनसिप्रचेतसादिनां वैकल्पिकीं साविण्ड्यनिवृत्तिमादायोपपाद्यतां तदितिचेन्मत्यम् । तथापि—

वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ।

इत्यत्र वृत्तादिपदेन पुरुषसंख्याविशेषस्याप्युपलक्षितत्वात्, तस्य च

'कलौ युगे त्विमान्धर्मान् वर्ज्यानाहुर्मनीषिणः ।'

इति निषेधात् न साम्प्रत इति ॥ ५ ॥

द्विविधं तावदाशौचं कर्मायोग्यत्वं स्पर्शायोग्यत्वं च । तत्राद्यस्य भेदोदाहरणे उक्तकालनिमित्ते पुनर्दर्श्येते । इदानीमस्पृश्यत्वलक्षणाशौचस्य कालनिमित्ते दर्शयति—

यावत्सूतकमस्पृश्या माता प्राक् स्नानतः पिता ॥

अन्येषां तु सगोत्राणामस्पृश्यत्वं न सूतके ॥ ६ ॥

*यावदिति । सूतकमभिव्याप्येतियावत्सूतकम् । माता—जननीति* अस्पृश्या भवति यावत्सूतककालं स्पर्शायोग्येत्यर्थः । यद्यपि चात्र प्रतिवर्णमाशौचभेदात्तावत्कालमस्पृश्यत्वमिति प्रतीयते, तथाऽपि सर्ववर्णसाधारण्येन दशरात्रमेवास्पृश्यत्वमिति ध्येयम् ।

सूतिका सर्ववर्णानां दशरात्रेण शुध्यति ।

ऋतौ तु न पृथक् शौचं सर्ववर्णेष्वयं विधिः ॥

इतिप्रचेतःस्मरणात् । यत्तु—

अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः ।

दशरात्रेण शुध्यन्ति भूमिष्ठं च नवोदकम् ॥

इत्यत्र ब्राह्मणीपदं सर्ववर्णस्त्र्युपलक्षणम् । यच्च—

ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः ।

गता शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥

इतिब्रह्मपुराणं तदसच्छूद्राविषयम् ।

एष दशरात्रेण सूतिकायाः स्पर्शयोग्यत्वेऽपि कर्मयोग्यत्वं कालान्तरेणैव ।

तदाह पैठीनसिः—

"सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेन्मासेन स्त्रीजननीम्" इति । दशमदिनीयस्नानानन्तरं विंशतितमे मासे चातीते पुनः स्नानमिति स्नातापदोपादानस्य तात्पर्यम् । तथाच त्रिंशद्रात्रादिदिनानि जननदिनाद्गणयेत् । इदमपि सर्ववर्णसाधारणमिति प्राञ्चः । अशीतिसंख्याविषयमिति मदीयः ।

अनौ सपिण्डाः शुचयो मातापित्रोस्तु सूतकम् ।
इतिपैठीनसिवाक्यबोधितपित्राशौचे विशेषमाह—
मागिति । स्नानतः प्राक् पिताऽप्यस्पृश्य इत्यर्थः । स्नानात्प्रागिति वदता स्नानोत्तरं स्पृश्यत्वमुक्तम् । तदुक्तं ब्रह्मपुराणे—

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचैलं स्नानं तु शुद्धो भवति तत्क्षणात् ॥

संवर्तोऽप्याह—

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः । इति ॥

अत्र पुत्रपदोपादानात्,

नाशौचं सूतके पुंसः सपिण्डानां कथञ्चन ।
मातापित्रोरशौचं स्यात्सूतकं मातुरेव हि ॥

इत्यङ्गिरोवचने पुंस इत्युपादानात्पुत्रोत्पत्तौ पितुरस्पृश्यत्वं स्नानं च, न कन्योत्पत्ताविति केचित् । तन्न । बीजसम्बन्धाविशेषात् ।
अत एव बौधायनः—

"जनने तावन्मातापित्रोर्दशाहमाशौचं मातुरित्येके तत्परिहरणात् । पितुरित्यन्ये शुक्रस्य प्राधान्यादयोनिजा अपि पुत्राः श्रूयन्ते मातापित्रोरेव तु संसर्गसाम्यात्" इति । संसर्गस्य शुक्रशोणितयोः साम्यादितिहेतुं वदता कन्योत्पत्तावपि तत्सत्त्वेन पितुराशौचमस्त्येवेति ध्वनितम् । तेन तदपनोदनाय स्नानमप्यावश्यकमेवेति । न च शुक्रशोणितसम्बन्धसाम्ये मातृवत्पितुरपि दशाहमस्पृश्यतापत्तिरिति वाच्यम् । पितू रजोऽभावात् ।
तदाह वसिष्ठः—

नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति ।
रजस्तत्राऽशुचि ज्ञेयं तच्च पुंसि न विद्यते ॥ इति ।

याज्ञवल्क्योऽपि—

पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम् । ( या० ३-१९ ) इति ।

इयं च स्नानमात्रेण पितुः शुद्धिः सूतिकासंसर्गाभावे "संसर्गं चेन्न गच्छति" इतिस्मरणात् ।

प्रसवे गृहमेधी तु न कुर्यात्सङ्करं यदि ।
दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः ॥ ( परा० ३-२४ )

इतिपराशरस्मरणाच्च । तत्सङ्करे तु स एवाह—

यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः ॥

सूतकं तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥ ( परा० ३-२६ ) इति ।

सम्पर्क=स्पर्शः । "मातुरेव सूतकम् । तां स्पृशतश्च पितुः नेतरेषाम्" इति सुमन्तुस्मरणात् । "सहशयनासनभोजनम्" इति माधवः । सङ्गम इत्यन्यः । पितृवत्सापत्नमातॄणामपि स्नानानन्तरमेव स्पृश्यत्वम् । तत्संस्पर्शे च दशाहमस्पृश्यत्वमिति । तदाह ब्रह्मपुराणम्—

अन्याश्च मातरस्तद्वत्तद्गेहं न व्रजन्ति चेत् । इति ।

तद्गृहगमनं=तत्सम्पर्कः । अन्येषां सूतिकास्पर्शे तु स्नानमात्रमेव । तदाहाङ्गिराः—

सूतके सूतिकावर्जमङ्गस्पर्शो न दुष्यति ।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥ इति ।(१)

सपिण्डानां पुनरस्पृश्यत्वाभावमाह–अन्येषामिति । मातापितृव्यतिरिक्तानां सपिण्डानां सूतकनिमित्तमस्पृश्यत्वं नास्ति । तदाह कूर्मः—

सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति ॥ इति ।(२)

जनने सपिण्डानां स्नानमपि नास्ति । तदाह बृहस्पतिः—

शावाशौचं च सर्वेषां सूतकं मातुरेव हि ।
स्नानं प्रकुर्यात्तु पिता ज्ञातयो न सचैलिनः ॥ इति ॥ ६ ॥(३)

अस्पृश्यत्वलक्षणाशौच एव कालान्तरं निमित्तान्तरं चाह—

मृतकं तु त्रिधा भित्त्वा यावत्पूर्वांशनिर्गमः ।
सर्वेऽप्यस्पृश्यतां यान्ति सञ्चयस्तूपलक्षणम् ॥ ७ ॥

मृतकमिति । मृतकं तु मरणाशौचं त्रिधा विभज्य यावत्प्रथमांशसमाप्तिर्भवति तावत्सर्वेऽपि सपिण्डा अस्पृश्यत्वं प्राप्नुवन्ति ।

---

(१) आनन्दाश्रममुद्रितस्मृतिसमुच्चयपुस्तकस्थाङ्गिरःस्मृतौ नोपलब्धोऽयं श्लोकः । मिताक्षरायां त्वङ्गिरोनाम्ना 'पित्रोस्तु' (या० ३-१९) श्लोकव्याख्यानावसरे विज्ञानेश्वरेण समुट्टङ्कितोऽयम् । तत्र 'सूतिकावर्ज्यं संस्पर्शो न निषिध्यते' इति पाठः । निर्णयसिन्धावप्ययमेव पाठः । विद्वन्मनोहरायां तु "प्रसवे" ( परा० स्मृ० ३-२४ ) श्लोकव्याख्यानावसरे नन्दपण्डितेरुद्धृतोऽयं श्लोकः तत्र तु शुद्धिचन्द्रिकावदेव पाठः ।

(२) "सपिण्डानामङ्गस्पर्शो न दुष्यति" इति 'सर्वेषां' (परा० ३-२५) श्लोकव्याख्यानावसरे विद्वन्मनोहरायां पाठः ।

(३) नायं श्लोकः स्मृतिसमुच्चयपुस्तके बृहस्पतिस्मृतौ सम्प्राप्तः ।

तदाह देवलः—

स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः।
शूद्रविट्क्षत्रविप्राणां यथाशास्त्रं प्रचोदितम्॥ इति(१)।

एतच्च यत्रास्थिसञ्चयनाभावस्तादृशी अनुपनीताशौचे अतिक्रान्ताशौचे त्रिरात्रादौ च वेदितव्यम्। तर्ह्यस्थिसञ्चयनवत्युपनीताशौचे कथमित्यत आह—सञ्चयस्त्विति। उपलक्ष्यते विशिष्यतेऽनेनेत्युपलक्षणं विशेषणम्। तथाच उपनीताऽऽशौचे अस्थिसञ्चयनविशिष्टादेव स्वाशौचविभागात्स्पृश्यत्वं, न केवलत्रिभागात्रापि केवलास्थिसञ्चयनादित्यर्थमिति। तदप्याह देवलः—

दशाहादित्रिभागेन कृते सञ्चयने क्रमात्।
अङ्गस्पर्शनमिच्छन्ति वर्णानां तत्त्वदर्शिनः। इति। (२)

संवर्तोऽपि—

चतुर्थेऽहनि कर्तव्यमस्थिसञ्चयनं बुधैः।
ततः सञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च॥ (संव० ३८, ३९) इति।(३)

एतेन—

त्रिचतुःपञ्चदशभिः स्पृश्या वर्णाः क्रमेण तु।
चतुर्थेऽहनि कर्तव्यः संस्पर्शो ब्राह्मणस्य तु॥
पञ्चमेऽहनि विज्ञेयः संस्पर्शः क्षत्रियस्य तु।
सप्तमेऽहनि वैश्यस्य ज्ञेयं संस्पर्शनं बुधैः॥
दशमेऽहनि शूद्रस्य कार्यं संस्पर्शनं बुधैः।(४)

इतिदेवलाङ्गिरोवाक्यान्यपि अस्थिसञ्चयने कृत इतिव्याख्येयानि। एतेन केवलास्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनं कलिकालातिरिक्तविषयमुक्तम्।

---

(१) आनन्दाश्रममुद्रितस्मृतिसमुच्चयपुस्तकस्थदेवलस्मृतौ नोपलभ्यतेऽयं श्लोकः। मिताक्षरायां तु 'त्रिरात्रम्' (या० ३-१८) श्लोकव्याख्यानावसरे विज्ञानेश्वरेण देवलनाम्ना समुद्धृतोऽयम्।

(२) अयं श्लोको मुद्रितस्मृतिसमुच्चयपुस्तकस्थदेवलस्मृतौ नोपलभ्यते। मिताक्षरायां तु 'त्रिरात्रम्' (या० ३-१८) श्लोकव्याख्यायां देवलनाम्ना समुद्धृतो लभ्यते।

(३) उक्तपुस्तकस्थसंवर्तस्मृतौ "बुधैः" इत्यत्र 'द्विजैः' इति 'मङ्गस्पर्शनमेव च' इत्यत्र 'मङ्गस्पर्शो विधीयते' इति च पाठः समुपलभ्यते।

(४) नैतानि वचनानि स्मृतिसमुच्चये समुपलभ्यानि।

अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।

इति कलिवर्ज्यप्रकरणे केवलास्थिसञ्चयनपदोपादानात् ॥ ७ ॥

एवमस्पृश्यत्वलक्षणाशौचस्य कालनिमित्ते अभिधाय इदानीं पुत्रीसूतौ जननाशौचस्याल्पत्वमित्युक्तम् । तदुपपादयति—

सूयते चेत्पितुर्गेहे जातं पित्रोस्त्रिरात्रकम् ।
षष्ठे मासि विनिर्याते प्रसूतिर्गर्भनिर्गमः ॥ ८ ॥

सूयते इति । ऊढा कन्या पितुर्गेहे चेत्प्रसूयते तदा पित्रोर्जातं जनननिमित्तमाशौचं त्रिदिनमित्यर्थः ।

तदाह विष्णुः—

"संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं चेति" । एकरात्रं बन्धूनां त्रिरात्रं पित्रोः ।

दत्ता कन्या पितुर्गेहे सूयते म्रियतेऽथवा ।
तद्बन्धुवर्गस्त्वेकेन शुद्ध्यते जनकस्त्रिभिः ॥

इतिब्रह्मपुराणात् ।

एतेन "प्रसवे एकरात्रं मरणे त्रिरात्रम्" इति विज्ञानेश्वरीयं विवरणमसवरणमिति । इदं चाशौचं पितृभोजनशयनदेवार्चनस्थानव्यतिरिक्तस्थाने प्रसवे ज्ञेयम् । मुख्यगृहप्रसवे तु पूर्णाशौचम् ।

स्वमशौचं चरेत्सम्यक् पृथक्स्थानेऽव्यवस्थिते ।

इतिब्रह्मपुराणवचनात् ।

अत्राऽव्यवस्थितेति पदच्छेदः । तत्र 'प्रसवे पितुः पूर्णं, बन्धूनां त्र्यहम्' इति केचित् । अत्रोदेतिवचनादनूढायां पितृगृहप्रसवे पित्रादीनां पूर्णमेवाशौचमिति गम्यते । सपिण्डत्वाद्विवाहात्प्राक् सगोत्रत्वाच्च । पूर्णाशौचे सपिण्डसगोत्रत्वस्यैव प्रयोजकत्वात् । तदाहतु शङ्खलिखितौ—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं च शौचाऽऽशौचं तदानुगम् ॥ इति । (१)

अत्र प्रकरणे साप्तपौरुषी सपिण्डता गोत्रतः । गोत्र एव एकस्मिन्नेव गोत्र इति परिभाषा । तत्फलं च पिण्डोदकदानशौचाशौचादिकं तदनु विधीयते । न चैव तन्मरणेऽपि पूर्णाशौचमसङ्ग । वक्ष्यमाणविशेषवचनबाधादित्यलम् । इदानीं गर्भपातपाताशौचमभिधास्यन् स्रावपातयोः सूतिभेदं वक्तु सूतिलक्षणं तावदाह—षष्ठे मासीति । षष्ठे

(१) स्मृतिसमुच्चये नोपलब्धोऽयं श्लोकः

मासि विनिर्यातेऽनीते सति सप्तमादौ मासे गर्भकोशाद्गर्भस्य निर्गमः प्रसूतिः प्रकृष्टा सूतिः पूर्णावयवसजीवनिर्गमनात्।

तदाह याज्ञवल्क्यः—

मनश्चैतन्ययुक्तोऽसौ नाडीस्नायुशिरायुत ।
सप्तमे चाष्टमे चैव त्वङ्मांसस्मृतिमानपि ॥ ( या० ३-८१ )

यत्पुनस्तेनैव—

नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः ।
निःसार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः ॥ ( या० ३-८३ )

इतिनवमदशमयोरेव मासयोः प्रसूतिकालत्वमुक्तं तत्प्रायोवादेन, नान्यपरिसंख्यापकत्वेन ।

अत एव पराशरः—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥(परा०३-१६) इति ॥८॥

एवं सूतिलक्षणमभिधाय पातस्रावौ लक्षयति—

पञ्चमे मासि षष्ठे वा पातः स्याद्गर्भनिर्गमः ।
चतुर्ष्वाद्येषु मासेषु गर्भस्य स्राव उच्यते ॥ ९ ॥

पञ्चमे मासीति । पञ्चमषष्ठयोर्मासयोर्गर्भनिर्गमः पात इति । आद्येषु गर्भधारणदिनासन्निहितेषु चतुर्षु मासेषु गर्भस्य निर्गमः, स्राव इति च लाघवार्थं संज्ञाकरणम् । यद्यपि स्रवतिर्द्रवद्रव्यकर्तृके स्यन्दने वर्तते, तच्च प्रथममास्येव सम्भवति,—

प्रथमे मासि सङ्क्लेदभूतो धातुविमूर्च्छितः ॥ ( या० ३-७५ )

इतियोगीश्वरस्मरणात्, न तु द्वितीयादौ, तत्र

मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः । ( या० ३-७६ )

"स्थैर्यं चतुर्थे त्वङ्गानाम्" ( या० ३-८० ) इति तेनैवाऽभिधानात् । तथापि द्रवाद्रवसाधारणेऽथ पातमात्रे परिभाष्यते । तदुक्तं मरीचिपराशराभ्याम्—

आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । ( परा० ३-१६ ) इति

अत्राऽभिव्याप्त्यर्थं । ननु चतुर्थमासे स्रावत्वमनुपपन्नं तन्निमित्तं त्रिरात्राशौचाभावात्किन्तु पातत्वमेव वाच्यम् । माससमसंख्याऽहोराशौचसाम्यादिति चेत् सत्यम्, जनकसपिण्डाऽऽशौचाभावसाम्येन स्रावत्वाभिधानात् ॥ ९ ॥

एवं पातस्रावौ लक्षयित्वा पाते जाताऽऽशौचाऽल्पत्वमुपपादयति

पञ्चमे पञ्च षष्ठे षट् दिवसाः पातसूतकम् ।
मातुरिष्टमतोऽन्येषां पितुश्च त्रिदिनं समम् ॥ १० ॥

पञ्चमे इति । पात उक्तलक्षणः तन्निमित्तमाशौचम् । पञ्चमे मासि पञ्च षष्ठे च षट् दिनानीति क्रमेण ज्ञेयम् । तदुक्तं ब्रह्मपुराणे—

षण्मासाभ्यन्तरं यावद्गर्भस्रावो यदा भवेत् ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥ इति ।

याज्ञवल्क्येनापि—

गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम् ( या० ३–२० ) इति ।

माससमैरिति सामान्याभिधानेऽपि तृतीयमासानन्तरं वेदितव्यम् ।

गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः ॥

इति मरीचिना तत्राशौचान्तरविधानात् । अचिरे=आद्यमासत्रये । उत्तमे=ब्राह्मणजातौ । अत्र सर्वत्र स्रावशब्दः पातपरः "पाते मातुर्यथा-मासम्" इतिस्मरणात् । अतो मातुरन्येषां सपिण्डानां पितुश्च त्रिदिनम् ।

पाते मातुर्यथामासं पित्रादीनां दिनत्रयम् ॥

इतिमरीचिस्मरणात् ।

"ऊनद्विवार्षिके प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्" (वशि० ४–२८) इतिवशिष्ठस्मरणाच्च । इदञ्च पाताऽऽशौचं वक्ष्यमाणस्रावाऽऽशौचं च समं सर्ववर्णसाधारणमित्यर्थः । उदाहृतब्रह्मपुराणवाक्ये तासामितिबहुवचनेन सर्ववर्णस्त्रीग्रहणात् । अत एव [एत] द्ग्रे

अत ऊर्ध्वं स्वजात्युक्तमाशौचं तासु विद्यते ॥

इत्यनेन बहुवचनान्ततच्छब्दपरामृष्टसर्ववर्णस्त्रीषु षण्मासानन्तरं स्वजात्याशौचं विहितं, तत्परामर्शो चोभयत्रापि बहुवचनं स्वजात्या-शौचविधाने चानुपपन्नं स्यात् । यत्तु—

गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्तिता ।

इति प्रतिवर्णं भिन्नमाशौचमुक्तं मरीचिना तत्सर्वैः स्वस्वजात्याशौ-चानुष्ठानपक्षे । सर्वेषां दशरात्रपक्षे तु [ आद्यमासत्रये ] त्रिरात्रमेवेति न विरोधः ॥ १० ॥

एवं पाताशौचमभिधाय स्रावाशौचमाह—

त्रिदिनं त्रिषु मासेषु चतुर्थे च चतुर्दिनैः ।
स्रावे तु मातुरेव स्यान्न ज्ञातीनां न वै पितुः ॥ ११ ॥

त्रिदिनमिति। आद्यमासत्रये गर्भस्रावे त्रिदिनं, चतुर्थमासे च चतुर्दिनं सूतकमिति पूर्ववाक्यादनुषज्यते। "स्रावे मातुस्त्रिरात्रं स्यात्" इति "अचिरे तूत्तमे त्र्यहः" इति च मरीचिस्मरणात् "गर्भसंस्रवणे त्रिरात्रम्" इति शातातपस्मरणात्। "सेवक्षणे गर्भस्य त्र्यहम्" इति गौतमस्मरणाच्च। इदं पुनर्मातुरेव न सपिण्डानां न वा जनकस्य। तदाह हारीतः—"गर्भपतने त्रिरात्रं स्त्रीणां रजोविपर्ययात्" इति। अवधारणं विवृणोति—न ज्ञातीनामिति। न सपिण्डानां न वा जनकस्य।

स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डेऽशौचवर्जनम्॥

इतिमरीचिस्मरणात्,

सद्यः शौचं सपिण्डानां गर्भस्य पतने सति॥

इतिब्रह्मपुराणाच्च।

हारीतब्रह्मपुराणयोः पातशब्दः स्रावपरः "न ज्ञातीनां न वै पितुः" [ षड० ११ ] इति निषेधे सिद्धे पुनः पितुरुपादानं,

यौनिकादग्निसम्बन्धादनुबन्ध्यादघे त्र्यहम्। [ मनु० ५—६३ ]

इत्यस्यात्राभावं ज्ञापयितुम्।

अत एव वृद्धवासिष्ठः—

"गर्भस्रावे मासतुल्या रात्रयः स्त्रीणाम्। स्नानमात्रमेव पुरुषस्य" इति। मासतुल्यं रात्र्यभिधानं चतुर्थमासाभिप्रायेण। आद्यमासत्रये त्रिरात्राभिधानात्॥ ११॥

अल्पाधिकभेदाद्द्विविधं सूतकमित्युक्तं तत्राल्पमुपपादितमिदानीमधिकाशौचमुपपादयति—

नाभिकर्त्तनतः पूर्वं शिशौ मेते च सूतकम्।
मातुः पूर्णमतोऽन्येषां पितुश्च त्रिदिनं समम्॥ १२॥

नाभिकर्त्तनत इति। नाभिच्छेदात्पूर्वं बाले प्रमीते जनन्याः पूर्णं स्वस्वजात्युक्तमाशौचमतो मातुरन्येषां सपिण्डानां पितुश्च त्रिदिनम्।

तदाह वृद्धमनुः—

जीवन् जातो यदि ततो मृतः सूतक एव तु।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्॥ इति

यत्तु—

मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति।
मातुः शुद्धिर्दशाहेन सद्यःशौचास्तु गोत्रिणः॥

इतिवृद्धप्रचेतसा "जातमृते मृतजाते वा कुलस्य सद्यःशौचम्" इति

वृद्धविष्णुना च सपिण्डानामाशौचाभाव उक्तः स शिशुमरणनिमित्ता- शौचविषय इति ।

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाऽऽशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥

इतिवृहन्मनुस्मरणात् । यत्तु—

जाते मृते सपिण्डानां त्रिरात्राच्छुद्धिरिष्यते ।
दशाहमेव दम्पत्योः सोदराणां तथैव च ॥

इतिवैयाघ्रपादेन वैषम्यमुक्तं तं निरस्यति—सममिति । इदं त्रिरात्रा- शौचं सपिण्डानां, पितुः, चकारात्सोदराणां च सममेव । वैषम्ये "पित्रा दीनां त्रिरात्रकम्" इति विध्यते ।

न चात्रालङ्घनसंविज्ञानबहुव्रीहिणा पितृव्यतिरिक्तानां ग्रहणं वैया- घ्रपादवचनबलादिति वाच्यम् । अनेकस्मृतिविरोधात्तस्याचारानुगतत्वात्, सूतिकासंसर्गविषयत्वाद्वेत्यलम् ॥ १२ ॥

मातुः पूर्णमित्युक्तं तत्किं पूर्णमित्यपेक्षायामाह—

दशाहं द्वादशाहं वा पक्षं मासमिति क्रमात् ।
ब्रह्मक्षत्रियविट्शूद्रवर्णानां पूर्णसूतकम् ॥ १३ ॥

दशाहमिति । ब्राह्मणक्षत्रियवैश्यशूद्राणां वर्णानां दशाहद्वादशाहपक्ष- मासमितं पूर्णं सूतकं सूतिनिमित्तमाशौचम् । यद्यप्यत्रापत्यविशेषो नोक्तस्तथापि तत्पुमपत्यप्रसवे द्रष्टव्यम् । स्त्र्यपत्यप्रसवे आशौचान्तर- दर्शनात् । तदुक्तमत्रिस्मृतौ—

पुंजन्मनि सपिण्डानां दशाहाच्छुद्धिरिष्यते ।
त्र्यहादेकोदकानां च एकाहं सूतकं क्वचित् ॥
स्त्रीजन्मनि सपिण्डानां सोदकानां त्र्यहाच्छुचि ।
स्त्रीषु त्रिपुरुषं ज्ञेयं सपिण्डत्वं द्विजोत्तमाः ॥ इति ।

अस्यार्थः—यथा पुंजन्मनि समानोदकानां त्र्यहमाशौचं तथा स्त्रीज- न्मनि सपिण्डानां त्रिरात्राशौचमिति दृष्टान्तार्थं सोदकोपादानम् । सपि- ण्डानां समानोदकानां च तुल्याशौचाऽनुपपत्तेः ।

तत्र सापिण्ड्यं त्रिपुरुषं तथा च त्रिपुरुषान्तर्वर्तिनामेव त्रिरात्राशौ- चमूर्ध्वन्तु समानोदकाशौचमेकरात्रम् । "एकाहं सूतकं क्वचित्" इति- पूर्वार्द्धवाक्यस्य । क्वचित्=स्त्र्यपत्यप्रसवे इत्यर्थः । सूतकमिति मृतकस्याप्यु- पलक्षणम् ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते । ( मनु० ५-५९ )

इतिमनुस्मरणात् । दशाहमिति द्वादशाहादेरुपलक्षणम् । तत्र दशाहं महागुरुव्यतिरिक्तविषयम् । तत्र "द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्" इत्याश्वलायनेन विशेषविधानात् । वाशब्दः पक्षान्तराणि सूचयति ।

तत्र पाराशरः—

दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतकाः ॥ इति ।

एतत्समानोदकविषयम् । "त्र्यहादुदकदायिनः" ( मनु० ५-६४ ) इतिमनुस्मरणात् ।

त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः ।

इतिबार्हस्पत्याच्च । दशाहपक्षस्तु सपिण्डविषयः ।

दशाहं शावमाशौचं सपिण्डेषु विधीयते । (मनु० ५-५९)

जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम् ॥ (मनु०५-६१)

इतिमनुस्मरणात् । क्षत्रियादिविषये देवलः—

दशाहं ब्राह्मणानां तु क्षत्रियाणां त्रिपञ्चकम् ।

विंशद्रात्रं तु वैश्यानां शूद्राणां मासमेव च ॥ इति ।

वशिष्ठोपि-"ब्राह्मणो दशरात्रेण पञ्चदशरात्रेण क्षत्रियो वैश्यो विंश तिरात्रेण शूद्रश्च मासेन" इति ।

पैठीनसिः-'षोडशाहं क्षत्रियस्य" इति ।

शातातपः—

एकादशाहाद्राजन्यो वैश्यो द्वादशभिस्तथा ।

शूद्रो विंशतिरात्रेण शुध्यते मृतसूतके ॥

वृद्धपराशरोपि—

क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः ।

तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ॥ इति ।

शूद्रविषये याज्ञवल्क्यः—

त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्तिनः ॥ ( या० ३-२२ )

शातातपः-"मन्त्रावश्यकवर्जनाच्छूद्रस्य नाधिकारो न प्रतिषेधः । तदाश्रितश्च सहत्स्यान्मासमित्येके" इति । तदाश्रितस्त्रिवर्णाश्रितस्त्रिवर्णवदेवाशौचभाक् इति ।

देवलः—

आशौचं दशरात्रं तु सर्वेषामपरे विदुः ।

निधने प्रसवे चैव पश्यन्तः कर्मणः क्षयम् ॥

अङ्गिराः—

सर्वेषामेव वर्णानां सूतके मृतके तथा।

दशाहाच्छुद्धिरथवा इति शातातपोऽब्रवीत्॥ इति।

तदयमर्थः—क्षत्रियस्य द्वीकादशाद्वादशपञ्चदशषोडशरात्रैः, वैश्यस्य पञ्चदशविंशतिरात्रैः, शूद्रस्य पञ्चदशविंशतित्रिंशद्रात्रैः त्रैवर्णिकाशौचादिनैश्च अथवा सर्वेषां वर्णानां दशरात्रेणेति। तदेतेषां पक्षाणां कलियुगीनतया लोकसमाचाराभावादुपेक्षैव चितेति वाशब्दं प्रयुञ्जानस्य भावः। तदाह हारीतः—

दशाह एव विप्रस्य सपिण्डमरणे सति।

कल्पान्तराणि कुर्वाणः कलौ मुह्यति किल्बिषी॥ इति। (१)

विप्रपदं क्षत्रियाद्युपलक्षकम्। दशाहपदं द्वादशाहादेरुपलक्षकम्। कल्पान्तराणीति बहुवचनसामर्थ्यात्। वर्णपदोपादानाद्वर्णसङ्कराणामन्यदिति ध्वनितम्। तदाह ब्रह्मपुराणम्—

शौचाऽऽशौचं प्रकुर्वीरन् शूद्रवद्वर्णसङ्कराः। इति।

कुण्डगोलककानीनसहोढादयोऽसवर्णाः, सूतादयः षट्(२) प्रतिलोमजाश्च।

शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः। (मनु० १०-४१)

इतिस्मरणात्। अपध्वंसो व्यभिचारः। यत्तु जाबालेन—

मासं शूद्रस्य शेषाणां सदाऽऽशौचमिति स्थितिः।

इत्यनेन शेषपदोपात्तानां सङ्कराणां सर्वदाऽऽशौचमित्युक्तं, तद्विहितकर्मानधिकारमभिप्रेत्य। अत एव "प्रतिलोमा धर्महीनाः" इति स्मृत्यन्तरम्। यदपि विज्ञानेश्वरेण(३) तेषामाशौचाभाव एवेत्युक्तम्, तद्ब्रह्मपुराणवचनविरोधाच्चिन्त्यम्। मूर्धावसिक्ताद्यनुलोमजरथकारस्य अविभागे पैतृकमाशौचं, विभागे मातृजातीयमेव। तदाहापस्तम्बः—

(१) नाऽयं श्लोकः स्मृतिसमुच्चये। विद्वन्मनोहरायां तु "अतः परं" (परा० ३-१) इतिश्लोकव्याख्यायां निर्णयसिन्धौ चोपलभ्यते। तत्र विद्वन्मनोहरायां 'कलौ व्यामोहमृच्छति' इति पाठः। निर्णयसिन्धौ तु 'मुह्यति' इत्यत्र 'भवति' इति पाठः। अन्यत् शुद्धिचन्द्रिकया समानम्।

(२) सूतवैदेहिकचण्डालमागधक्षत्तृआयोगवाः षट् प्रतिलोमजा इत्यर्थः।

(३) "क्षत्रस्य" (या० ३-२२) इति श्लोकव्याख्यायां मिताक्षरायामित्यर्थः।

क्षत्रविट्शूद्रजातीनां स्तश्चेन्मृतकसूतके ।
तेषां तु पैतृकाशौचं विभक्तानां तु मातृकम् ॥ इति ।(१)

विभागः पितृमरणमप्युपलक्षयति । तदाह जाबालः—

नानाजातिषु पारक्यं पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात् पारक्यमुभयोरपि ॥ [ इति ]

नानाजातयः उत्पादिका येषां ते तथा। तेषु मूर्धावसिक्तादिषु स्वाशौचविशेषाभावात्पारक्यमिति प्रतिज्ञातमुपपादयति-(जीवतः पितुरिति।) जीवतः पितुरितिविभक्तिव्यत्ययात्। जीवति पितरि पैतृकं=पितृजातीयम्। अतीते तस्मिन्मातृकम्। एवमुभयोरपि जननमरणयोः पारक्यमेवेत्युपसंहारः। यत्तु—

शूद्रापुत्रः पारशवो ब्राह्मणोत्पादितश्च यः ।
शूद्राऽऽचारेण तस्यापि शौचाऽशौचं विधीयते ॥(२)

इत्यङ्गिरोवचनं तदपि विभागानन्तरं पितृमरणोत्तरकालं च मातृजातीयाशौचप्रतिपादकमिति । अत एवाऽनुलोमजानामपि क्षत्रियत्वादिव्यपदेशः शङ्खेन तद्धर्मप्राप्त्यर्थं कृतः—"ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एव" इति । रथकारस्य तु शूद्रापत्ये करण्यामुत्पन्नत्वाच्छूद्राऽऽशौचवत्त्वमेव । एवं पत्नीनामपि जीवति भर्तरि तज्जातीयम्, मृते स्वस्वजातीयमेव । तदाह विष्णुः—

"पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचम्। मृते स्वामिन्यात्मीयम्" इति। हारितोऽपि—

मृतसूतेषु दासानां पत्नीनां चाऽनुलोमतः ।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकम् ॥ इति । (३)

यौतकं पृथक् स्वजातीयमिति सङ्क्षेपः । वर्णसन्निपाताशौचं तु "उ-

---

(१) नाऽयं श्लोक प्राप्तः स्मृतिसमुच्चयस्थापस्तम्बस्मृतौ। विद्वन्मनोहरायां "एकपिण्डा" ( परा० ३-७ ) इतिश्लोकव्याख्यायां नन्दपण्डितैरापस्तम्बनाम्ना समुद्धृतः। शुद्धिचन्द्रिकायां तु 'नामाशौचं मृत०' इति पाठः। स न युक्त इति भाति ।

(२) नाऽयं स्मृतिसमुच्चयस्थाऽङ्गिरःस्मृतौ सम्प्राप्तः श्लोकः ।

(३) अयं श्लोको विद्वन्मनोहरायां "एकपिण्डा" (परा० ३-७) इति श्लोकव्याख्यायां सम्प्राप्तः तदनुसारेणाऽयं पाठः । शुद्धिचन्द्रिकायां तु 'मृते सूतेषु दासीनां' इति पाठः ।

त्तमाधमसपिण्डये" [ पड ६४ ] इत्यत्र वक्ष्याम' ॥ १३ ॥

जातमृताशौचसाम्यप्रसङ्गात्सूतमनुपनीताशौचसाम्य भेदादिनिरसनेनोपपादयति—

विप्राणामेकरात्रं यत्तच्छूद्राणां त्रिवासरम् ।
त्रिरात्र चेद्दशाह तदिति भेदो न साम्पतः ॥ १४ ॥

विप्राणामेकेति । विप्राणा यदेकरात्र तच्छूद्राणां त्रिरात्र, यच्च त्रिरात्रं तद्दशाहमिति। आद्यन्तवर्णोपादानेन मध्यवर्त्तिनोः क्षत्रियवैश्ययोरपि ग्रहणम् । एकरात्रादिशब्दाश्च तत्तद्भेदोपलक्षका । तेन वर्णभेदेनाऽनुपनीताशौचे यो भेद स न शिष्टसम्मत । भेदश्चोपपादितो ब्रह्मपुराणे—

एकाहं त्वद्विजेपूक तच्यह शूद्रजातिषु ।
त्र्यह चेत्तद्दशाह स्याद्दशाशेनोत्तरम तु ॥ इति ।

उत्तरत्र=क्षत्रियवैश्ययो । द्वादशाहदशांश सपादिदिन किञ्चिन्न्यूनम्। पञ्चदशाहदशांशम्=सार्द्धदिनमित्यर्थ । ऋष्यशृङ्गस्तु प्रकारान्तरेणाह—

यत्र त्रिरात्र विप्राणामाशौच सम्प्रदृश्यते ।
तत्र शूद्रे द्वादशाह षड् नव क्षत्रवैश्ययो । इति (१)

अङ्गिरसाऽपि प्रकारान्तरेणाभिहितम्—

विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी ।
त्र्यह तु क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते तथा ॥
निर्वृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते ।
निर्वृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ॥
शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभि ।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते । इति । (२)

भेदासमतिबीज चाहाङ्गिरा —

---

(१) अय श्लोक मिताक्षरायां "अहस्त्वदत्त' ( या० ३-२४ ) इति श्लोकव्याख्याया विज्ञानेश्वरेण समुद्धृतः। तत्र 'द्वादशाद' इति पाठ ।

(२) नैतानि वचनानि स्मृतिसमुच्चयस्थाऽङ्गिर स्मृतौ सम्यगा । ति । निर्णयसिन्धौ त्वङ्गिरोनाम्ना "निर्वृत्तचूडके" इत्यारभ्य "द्वादशाहो विधीयते" इत्यन्तानि दृश्यन्ते तदनुसारेणाय पाठ । मिताक्षरायां तु "आदन्तजन्मन" ( या० ३-२३ ) इतिश्लोकव्याख्यायां 'विप्रेन्यून' इत्यर्थे समुपलभ्यते तत्र 'विप्रे न्यूनत्रिवर्षे तु' इति पाठ' ।

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः ।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वन्हा विधीयते । इति (१)

व्याघ्रपादपि—

तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च ।
उपनीते तु विषमं तस्मिन्नेवातिकालजम् ॥ इति ॥

सर्वेषां वर्णानामुपनयनसंस्कारात्प्राक् वयोनिमित्तमाशौचं समानमेवेति समुदायार्थः ॥ १४ ॥

एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति—

छिन्ननाभेः शिशोर्मृत्यौ मृतस्य प्रसवेऽपि च ।
मातुश्च गोत्रिणां चैव सर्वेषां पूर्णसूतकम् ॥ १५ ॥

छिन्ननाभेरिति । नालच्छेदानन्तरं शिशौ प्रेते प्रेतस्य वा शिशोः प्रसवे मातुः, चकाराज्जनकस्य, गोत्रिणां सपिण्डानां च सर्वेषां पूर्णं स्वस्वजात्युक्तमाशौचं दशाहादिकमेव । तथाह हारीतः-"जातमृते मृतजाते वा सपिण्डानां दशाहमाशौचम्" इति । जातमृत इति नाभिच्छेदानन्तरमिति द्रष्टव्यम् । तदाह जैमिनिः—

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥ [ इति ]

यावन्नालं न छिद्यते तावच्छिशूपरमे सूतकं पूर्णं नाप्नोति सपिण्डानां, किन्तु त्रिरात्रमेव ।

जीवन् जातो यदि ततो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां दिनत्रयम् ॥ (२)

इति वचनात् । सूतक एव सूतकजातमात्रे इत्यर्थः । छिन्ने नाले शिशौ प्रेते पूर्णमेव सूतकं विधीयते इत्यर्थः । पारस्करोऽपि—

गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत् ॥ इति ।

गोत्रिणामितिबहुवचनेनैव सर्वस्य प्राप्ते पुनस्सर्वेषामिति वचनं

(१) नाऽयं श्लोकः स्मृतिसमुच्चयस्थाङ्गिरः स्मृतौ सम्प्राप्तः। मिताक्षरायां त्वङ्गिरोनाम्ना "अहस्त्वदत्त" ( या० ३-२४ ) इतिश्लोकव्याख्यायां लभ्यते ।

(२) अयं श्लोकः "भृग्वग्निमरण" ( परा० ३-१० ) इतिश्लोकव्याख्यायां विद्वन्मनोहरायां "गर्भस्रावे" ( या० ३-२० ) इतिश्लोकव्याख्यायां मिताक्षरायां निर्णयसिन्धौ च समुपलभ्यते तत्र सर्वत्र 'दिनत्रयम्' इत्यत्र 'त्रिरात्रकम्' इति पाठः ।

बाले मृते सपिण्डानां सद्य शौच विधीयते।
दशाहेनैव दम्पत्या सोदराणां तथैव च॥ (१)

इति व्यासोक्तवचस्यनिरासायेति। सपिण्डाना दशाहमितिसाख्या भिधानात्॥ १५॥

सूतकमिति वदता शिशुपरमनिमित्ताशौचाद्यभाव उक्तस्तमुपपा दयति—

सूतिमध्ये मृते बाले शाव सद्यः पराकृतम्।
शावादल्पा समा वाऽपि सूतिः शावेन शुद्ध्यति॥ १६॥

सुतिमध्य इति। सूतिमध्ये=जननाशौचमध्ये बाले प्रेते शावनिमित्तमाशौचोदकदानादि सद्य स्नानमात्रेण निवर्तते। कात्यायनोऽपि—

अनिवृत्ते दशाहे तु पञ्चत्व यदि गच्छति।
सद्य एव विशुद्धि स्यान्न प्रेते नोदकक्रिया॥ (इति)

अत एव विष्णुपारस्कराभ्या तत्र सद्य शुद्धिरभिहिता-"जात मृते मृतजाते वा कुलस्य सद्य शोचम्" इति। (२)

जीवन् जातो यदि म्रियात्सद्य एव विशुद्ध्यति। इति।

दशाहान्त ,शिशुपरमनिमित्ताशौचव्यपगमप्रसङ्गेनाऽऽशोचान्तर सङ्करेऽपि निर्णयमाह—शावादल्पेति। प्रक्रान्तशावाशौचकालादल्पकाल समकाल वा मध्यपतित सूत्याशौच प्रक्रान्तशावाशौचकालेनैवापैति, न प्रतिनिमित्त नैमित्तिकमावर्तत इति। तदुक्त षट्त्रिंशन्मते—

शावाशौचे समुत्पन्ने सूतक तु यदा भवेत्।
शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी॥ इति

आङ्गिरा—

सूतक मृतके भूयो यदि तु स्यादनिर्दशम्।
तच्छेषेणैव शुद्धि स्यान्मृतके सूतक तथा॥ इति (३)

---

(१) नाऽयं श्लोक स्मृतिसमुच्चयस्थव्यासस्मृतौप्राप्तः।

(२) वचनमिद मिताक्षरायां "गर्भस्रावे" (या० ३-२०) इतिश्लोकव्याख्यायां वृद्धविष्णुनाम्ना समुपलभ्यते। तदनुरोधेनाऽयं पाठः स्थापित। शुद्धिचन्द्रिकायां तु 'बालस्य सद्य शुद्धि' इति पाठ।

(३) नाऽय श्लोक स्मृतिसमुच्चयस्थाऽऽङ्गिरःस्मृतौ प्राप्त। मिताक्षराया त्वङ्गिरोनाम्ना "अन्तराजन्म" (या० ३-२०) श्लोकव्याख्यायामुपलभ्यते। तत्राऽय पाठ—

मृतकशेषेणैवेत्यर्थः । देवलः—

आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा । (१)

हारीतोऽपि—

गुरुणा लघुशुध्येत्तु लघुना नैव गुर्विति । (२)

तदेतद्विषमकालीनाशौचसङ्करे । समकालीनाशौचसङ्करे तु शङ्खः—

समाशौचस्य सम्पाते पूर्वाशौचेन शुद्ध्यति ।

असमानं द्वितीयेन धर्मराजवचो यथा ॥ ( श० १५-१० ) इति(३)

उभयोरेकदिनोत्पत्तौ तु बौधायनः—"जननमरणयोः सन्निपाते समानो दशरात्र" ( १-५-१२३ ) ( इति ) । दशरात्रपदं स्वस्वाशौचकालोपलक्षणम् । अत्र सूति शावेनापैतीत्येव वक्तव्ये शुद्ध्यतीत्यभिधानं शावाशौचान्तः पुत्रजन्मनि जातकर्माद्यर्थमपि शुध्यर्थमभिधानात् ।

आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।

कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥

इतिप्रजापतिस्मरणात् ॥ १६ ॥ (४)

शावाशौचवत् न्यायसाम्यात्सूत्याशौचस्यापि समाल्पशावाशौचशोधकत्वप्राप्तौ विशेषमाह—

यद्वा वक्ष्यमाणस्य "न सूतिः शावशोधिनी" ( षड० १९ ) इत्यस्य पुरस्तादपवादमाह—

स्वभावबहुसूतिस्तु न्यूनशावविशोधिनी ।

बहुमङ्ख्यदिनं यत्तु तत्स्वभावाद्बहूच्यते ॥ १७ ॥

स्वभावेति । प्रमान्ते दशाहादिजननाशौचे त्र्यहादिस्वल्पशावाशौचपाते सूत्याशौचशेषेणैव तच्छुद्धिः ।

---

सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् ।

तत्राऽधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥ इति ।

निर्णयसिन्धावप्ययमेव पाठः ।

(१) नाऽयं श्लोकः स्मृतिसमुच्चयस्थदेवलस्मृतौ प्राप्तः ।

(२) नाऽयं श्लोकः स्मृतिसमुच्चयस्थहारीतस्मृतौ प्राप्तः ।

(३) स्मृतिसमुच्चयस्थशङ्खस्मृतौ प्राप्तोऽयं श्लोकः । तत्राऽयं पाठः—

समानं त्वल्पशौचं तु प्रथमेन समापयेत् । इति ।

(४) नाऽयं श्लोकः स्मृतिसमुच्चयस्थप्रजापतिस्मृतौ । मिताक्षरायां "अन्तराजन्म" ( या० ३-२० ) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च प्रजापतिनाम्ना समुद्धृतोऽयम् ।

"आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा। (१)
'गुरुणा लघु शुद्ध्येत लघुना नैव गुर्विति॥ (२)

इतिदेवलहारीतवचनात्।

स्वभावबहुशब्दार्थमाह–बहुसङ्ख्यदिनमिति। यत्स्वभावाद्बहुसङ्ख्यदिन तद्बहित्युच्यते इति न यत्र रात्रिशेषे यामशेषे वाऽऽशौचान्तरसन्निपातेन द्वित्रदिनाधिक्याद्बहुसङ्ख्यदिनत्वं। सूते सम्पद्यते तत्रागन्तुकाधिकदिनमध्यपतितस्य न्यूनस्यापि शावाशौचस्य सूतिर्न विशोधिकेति। तद्यथा–त्रिरात्रे सूत्याशौचे यामशेषे स्वल्पसूत्याशौचान्तरपातेन दिनत्रयाधिक्यात् षड्रात्रे स्वल्पशावाशौचपातेऽपि न पूर्वशेषेण शुद्धिरिति। अत एवोक्तम्—

स्वभावबहुसूतिस्तु न्यूनशावविशोधिनी। (पङ्० १७) इति।

यद्वा सप्तममासानन्तरमेव स्वाभाविकबहुदिनत्वं सूते। अतस्तस्या एव न्यूनशावविशोधकत्वम्, न नैमित्तिकाल्पकालीनाया पातादिरूपाया सूतेः स्वापेक्षयाऽल्पशावशोधकत्वमिति। तदाह ब्रह्मपुराणम्—

नागन्तुकैरथाहोभिराशौचमपनुद्यते। (इति।)

न च पातनिमित्तशावस्याऽल्पशावशोधनमिति। आगन्तुकै रात्रिशेषादावाशौचोत्तरनिपातनिमित्तैरथाहोभिराशौचदिनैरित्यर्थः॥१७॥

तत्रैव विशेषान्तरमाह—

सूतिमध्ये यदा तुल्यमधिकं वा मृतं तदा।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी॥ १८॥

सूतिमध्य इति। प्रक्रान्ते सूत्याऽऽशौचे यदा तुल्यकालमधिककालं वा शावाशौचमापतति तदा शावेनैव सूत्यपनोदो न सूत्या शावापनोदः। अत्र "न सूतिः शावशोधिनी" इत्येव वक्तव्ये यत् "शावेन शुद्ध्यते सूतिः" इत्युक्तमपि पुनरुक्तं तत्सूतकधर्माणामङ्गस्पर्शाद्दत्वादीनामप्यभावबोधनायेति। अत एवाङ्गिराः—

सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्।

(१) नेदं वचनं स्मृतिसमुच्चयस्थदेवलस्मृतौ। निर्णयसिन्धौ तु हारीतनाम्ना समुद्धृतम्।

(२) नेदं वचनं स्मृतिसमुच्चयस्थहारीतस्मृतौ। निर्णयसिन्धौ तु हारीतनाम्ना समुद्धृतम्। तत्र 'शुद्ध्येत' इत्यत्र 'शुद्ध्येत्तु' इति 'गुर्विति' इत्यत्र 'तद्गुरु' इति च पाठः।

तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ॥ इति । (१)

मृतकमधिकृत्यैव कालशौचाधिकामित्यर्थः । अतश्च प्रेतक्रियाऽपि तत्र न निवर्तते इत्युक्तं शातातपेन—

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः ॥
प्रारब्धे प्रेतपिण्डे तु मध्येचेज्जननं भवेत् ।
तथैवाऽऽशौचपिण्डांस्तु शेषान् दद्याद्यथाविधि ॥ इति (२)

अत्र विशेषमाह वसिष्ठः—

पितुर्दशाहमध्ये तु मातुः स्यात्प्रसवो यदि ।
पिण्डोदकक्रियां कुर्याच्छ्राद्धं चात्र विवर्जयेत् ॥ ( इति ) ।

श्राद्धम्=एकादशाहादिकम् ।

पित्रोर्दशाहमध्ये तु भार्यायाः प्रसवो यदि ।
इतरेण च पुत्रेण कर्तव्याश्चोदकक्रियाः ॥ (३)

चतुर्विंशतिमते—

मृतजातकयोर्योगे या शुद्धिः साऽनुकथ्यते ।
मृतेन शुद्ध्यते जातं न मृतं जातकेन तु ॥ १८ ॥

इदानीं जननाऽऽशौचयोः सन्निपाते निर्णयमाह—

सूतिमध्ये यदा सूतं पूर्वोऽनधिकमापतेत् ।
तत्र पूर्वेण शुद्धिः स्यादधिके तु स्वकालतः ॥ १९ ॥

सूतिमध्य इति । प्रक्रान्तजननाऽऽशौचमध्ये यदि पूर्वाशौचकालात्समकालं न्यूनकालं वा नत्वधिककालं जननाशौचान्तरमापतति तत्र पूर्वाऽऽशौचशेषेण शुद्धिः स्यात् । विष्णुः—"जननाऽऽशौचमध्ये यद्य

---

(१) वचनमिदं स्मृतिसमुच्चयस्थाऽङ्गिरःस्मृतौ नास्ति । मिताक्षरायां 'अन्तराजन्म" ( या० ३-२० ) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च समुद्धृतम् ।

(२) नेदं श्लोकद्वयं स्मृतिसमुच्चयस्थशातातपस्मृतौ लभ्यते । मिताक्षरायां "अन्तराजन्म" ( या०३—२० ) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च शातातपनाम्ना समुद्धृतं लभ्यते । तत्र मिताक्षरायां शुद्धिचन्द्रिकया समानम् । निर्णयसिन्धौ तु 'स्वबन्धुभिः' इत्यत्र 'यथाविधि' 'पिण्डे तु मध्ये चेज्जननं' इत्यत्र 'पिण्डे च मध्ये च जननं' इति च पाठः ।

(३) नेदं वचनद्वयं स्मृतिसमुच्चयस्थवसिष्ठस्मृतौ ।

परं जननं स्यात्, तत्र पूर्वोऽऽशौचव्यपगमे शुद्धिः" इति। जननाधिकारे गौतमोऽपि—"तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन्" इति। (१)अत्र शुद्धिपदोपादानसामर्थ्याज्जनने जननान्तरपाते जातकर्मादावपि शुद्धिः। तथाह वशिष्ठः—

जननस्य च मध्ये च जननं तु पुनर्भवेत्।
पूर्वस्य नामकर्मादि कर्तव्यं तु द्विजन्मना॥ इति। (२)

नामकर्मणः आदि नामकर्मादि। जातकर्मेत्यर्थः। तस्यैवानन्यगतिकत्वात्। नामकरणनिष्क्रमणादेस्तु सावकाशत्वात्। ननु शावं समाऽऽशौचस्यापनोदकं सूतिकाशौचापनोदिका तुल्याधिकशावाऽऽपनोदिका समाल्पसूत्यपनोदिका चेत्युक्तम्, तर्हि स्वल्पाशौचान्ते दीर्घाशौचपाते कथमित्यत आह—अधिकमिति। पूर्वोक्ताऽऽशौचसङ्करनिर्णयशेषोऽयम्। अल्पकालाशौचे दीर्घकालाशौचपाते न पूर्वशेषेण शुद्धिः, किन्तु स्वकालेनैव। तदाहोशना—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।
न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति॥ इति। (३)

यमस्तु सोदाहरणमाह—

यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि।
आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यति॥ इति। (४)

अथवेदमेव व्याख्येयम्। अधिकमघवृद्धिमदाशौचं स्वकालेनैवापैति न पूर्वाऽऽशौचशेषेणेति। तदाह यमः—

अघवृद्धिमदाशौचं पश्चिमेन समापयेत्॥ इति। (५)

---

(१) वचनमिदं स्मृतिसमुच्चयस्थवसिष्ठस्मृतौ ४-२२ लभ्यते।

(२) नाऽयं श्लोकः स्मृतिसमुच्चयस्थवसिष्ठस्मृतौ लभ्यते।

(३) नाऽयं श्लोकः स्मृतिसमुच्चयस्थोशनस्मृतौ प्राप्तः। मिताक्षरायां "अन्तराजन्म" (या० ३-२०) इतिश्लोकव्याख्यायां निर्णयसिन्धौ विद्वन्मनोहरायां "अन्तरा तु" (परा० ३-२९) इतिश्लोकव्याख्यायां च उशनोनाम्ना समुद्धृतो लभ्यते। तत्र विद्वन्मनोहरायां 'स्वकालेनैव शुध्यति' इत्यत्र 'स्वकालेन विशुध्यति' इति पाठः। मिताक्षरानिर्णयसिन्ध्वोस्तु शुद्धिचन्द्रिकया समानम्।

(४) नाऽयं श्लोकः स्मृतिसमुच्चयस्थयमस्मृतौ प्राप्तः। निर्णयसिन्धौ तु यमनाम्ना समुद्धृतो लभ्यते।

(५) नेदं स्मृ० समु० यमस्मृतौ। मिताक्षरायां "अन्तराजन्म" (या० ३-२०) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च यमनाम्ना समुद्धृतम्।

अस्यार्थः—सपिण्डजननात्स्वपुत्रजननमप्यघवृद्धिमत्। तत्र स्नानात्प्रागस्पृश्यत्वश्रवणात्। दशाहादनन्तरमपि स्नानश्रवणाच्च। तथा सपिण्डमरणात् पित्रोर्भर्तुश्च मरणमघवृद्धिमत्। तेषां महागुरुत्वेन द्वादशरात्राशौचाऽभिधानात्। तथा प्रक्रान्ताशौचेऽघवृद्धिमतः पाते स्वकालेनैव शुद्धिर्न पूर्वशेषेणेति। अत्रैव विशेषमाह देवलः—

परतः परतः शुद्धिरघवृद्धौ विधीयते।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणैवानुशिष्यते॥ इति। (१)

अस्यार्थः—अघवृद्धौ परतः शुद्धिर्विधीयते सा चेत्पञ्चतमादह्नः परतः स्यात्। अन्यथा पूर्वेणैवाऽनुशिष्यत इत्यलब्धार्थोऽनुवादः। तदुक्तं कूर्मपुराणे—

अघवृद्धिमदाशौचमूर्ध्वं चेत्तेन शुध्यति।
अथ चेत्पञ्चमीं रात्रिमतीत्य परतो भवेत्॥ इति।

यद्येकस्मात्सूतकान्मृतकाद्वोर्ध्वमघवृद्धिमदाऽऽशौचं भवति तदा तेन पूर्वशेषेण शुद्धिः। तत्र विशेषः—[अथेति।] अथ पञ्चमीं रात्रिमतीत्य भवेत्तर्हि परतः परेणैव शुद्धिरित्यर्थः। तदेतत्स्पष्टमाह ब्रह्मपुराणम्—

आद्यं भागद्वयं यावत्सूतकस्य तु सूतके।
द्वितीये पतिते त्वाऽऽद्यात्सूतकाच्छुद्धिरिष्यते॥
अत ऊर्ध्वं द्वितीयात्तु सूतकान्तात् शुचिः स्मृतः।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे॥ इति।

चतुर्धा विभक्तस्य सूतकस्याऽऽद्यं भागद्वयं पञ्च दिनानि यावत्, द्वितीये सूतके पतिते आद्यसूतकान्ताच्छुद्धिः। आद्यभागद्वयोदूर्ध्वं तु सूतकान्तरपाते तदन्तेनैव शुद्धिरिति। एवमन्यत्राऽप्यूहनीयम्। अत्र सूतकसामान्योपादानेऽपि अघवृद्धिमतीति ज्ञेयम्। यमादिवाक्याऽनुरोधात्। न चेयं "रात्रिशेषे द्वाभ्यां प्रभाते तिसृभि" (गौ० १४-६) इति(२) विरुध्यत इति वाच्यम्। तस्य सपिण्डाऽऽशौचविषयत्वात्। अन्यथा ब्राह्मादिवाक्यविरोधः स्यात्। यत्तु पारिजाते मृतानामाशौचान्त्यदिनस्य चतुर्धा विभक्तस्याद्यभागद्वयेऽशौचे आशौचान्तरपाते पूर्वशेषेण शु·

(१) नाऽयं श्लोकः स्मृ० समु० देवलस्मृतौ प्राप्तः। निर्णयसिन्धौ तु देवलनाम्ना दृश्यते तत्र 'वाऽनुशिष्यते' इत्यत्र 'वाऽथ शिष्यते' इति पाठः

(२) वचनमिदं मिताक्षरायां "अन्तरा जन्म" (या० ३-२०) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च गौतमनाम्ना समुद्धृतं दृश्यते तत्र मिताक्षरायां 'प्रभाते' इत्यस्याग्रे 'त्रिभिः' इत्यधिकं पठितं।

द्धिः, सूर्यास्तानन्तरं रात्रिरूपे भागद्वये आशौचान्तरपाते त्रि द्यरू-पाद्वितीयसूतकान्ताच्छुद्धिः, "रात्रिशेषे द्वाभ्याम्" (गौ० १४-६) इत्यादिवाक्यबलादिति विवरणमुद्गीर्णं, तदसंवर्णमेव कूर्मवाक्यविरोधात् इत्यलं विस्तरेण ॥ १९ ॥

आशौचसङ्करे पूर्वशेषेण शुद्धौ विशेषमाह—

रात्रिशेषे यदा सूतेः पूर्वानधिकमापतेत् ।
ऊर्ध्वं दिनद्वयं पूर्वाद्यामशेषे दिनत्रयम्(१) ॥ २० ॥

रात्रिशेष इति । रात्रिरेव शेषो यस्य दशमस्याह्नस्तस्मिन्दशमे दिवसे, रात्रिपदस्याहोरात्रपरत्वेन चरमाहोरात्ररूपे वा शेषे यदि पूर्वाशौचसमकालं न्यूनकालं वा न त्वधिककालं सूतकमाशौचमापतेत्तदा पूर्वाशौचकालादूर्ध्वं दिनद्वयमधिकमाशौचं भवति । तत्रापि विशेषान्तरमाह—यामेति । रात्रेश्चरमयाममात्रे शेषे दिनत्रयमधिकमित्यर्थः । तदाहतुः शङ्खलिखितौ—"अथचेदन्तरा प्रमीयेत जायेत वा अवशिष्टैरेव दिवसैः शुध्येत । अहःशेषे द्वाभ्यां प्रभाते तिसृभिः" इति(२) । अहःशेषे इति । अहोरात्ररूपशेषे इत्यर्थः । प्रभातो रात्रेश्चरमो यामः ।

रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिः । (३)

इतिशातातपस्मरणात् । ततश्च नवमाहोरात्रमभिव्याप्याशौचान्तरपाते पूर्वेण शुद्धिर्दशमादिनादित्योदयमारभ्य रात्रेर्याममभिव्याप्याशौचान्तरपाते दिनद्वयेनेत्यर्थः सम्पद्यते । तदेतत्स्पष्टमाह बौधायनः—

"अथ यदि दशरात्रा सन्निपतेयुराद्यं दशरात्रमाशौचमानवमाद्दिवसात्" (बौधा० १-५-१०४) इति(४) । आङोऽभिव्याप्त्यर्थतया तेन च

---

(१) निर्णयसिन्धौ 'यदा सूतेः' इत्यत्र 'यदाशौचं' इति पाठः ।

(२) नेदं वचनमुपलब्धं स्मृतिसमुच्चये । निर्णयसिन्धौ तु "अहःशेषे" इति वचनं शङ्खलिखितनाम्ना लभ्यत एव ।

(३) नेदं वचनं स्मृतिसमुच्चयस्थशातातपस्मृतौ । मिताक्षरायां "अन्तरा" (या० ३-२०) इतिश्लोकव्याख्यायां निर्णयसिन्धौ च शातातपनाम्ना लभ्यते तत्र द्वयोरपि 'शुचिस्त्र्यहात्' इति पाठः ।

(४) स्मृतिसमुच्चयस्थबौधायनस्मृतौ 'रात्रा.सन्नि' इत्यत्र 'रात्रास्सन्नि' इति पाठः निर्णयसिन्धौ तु 'रात्रासन्निपाते पुराद्य' इति पाठ. । तत्रैव 'अत ऊर्ध्वं द्विरात्रेण शुद्धयां विरात्रेणैव' इति चाधिकं बौधायनोक्तं लभ्यते । त्रिशच्छ्लोकीव्याख्यायां रघुनाथभट्टैरुद्धृते बौधायनवचने एतद्रूपवदेव पाठः । स एव च युक्त इति भाति ।

समभिव्याप्त्येत्यर्थो भवति।

देवलोऽपि—

> पुनः पाते दशाहात्प्राक् पूर्वेण सह गच्छति।
> दशमेऽन्हि पतेद्यस्य द्व्यहात्स विशुध्यति॥
> प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः। इति (१)।

अत्र दशमनवमादिशब्दा अन्त्योपान्त्योपलक्षकाः। तेन क्षत्रियादीनामप्येतत्तुल्यम्। एतेन—"जननाशौचमध्ये यद्यपरं जननं स्यात्तदा पूर्वाशौचव्यपगमे शुद्धिः। रात्रिशेषे दिनद्वयेन, प्रभाते दिनत्रयेण। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्" इति विष्णुवचनं, "रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः" (गौ० १४-७) इति गौतमवाक्यं च व्याख्यातम्।

यत्तु विज्ञानेश्वरादिभिर्यथाश्रुतमेव रात्रिपदमादाय रात्रिमात्रावशिष्टे इत्युक्तं, तद्व्यहत्र्यहपदयोराशौचप्रकरणेऽहोरात्रपरतया परिमाणपाठाभ्यामेधावधारणाय न शुद्धाहिकतयोपर्यीतमिति न विरोधः। हरदत्तस्तु "प्रभाते तिसृभिः" (गौ० १४-७) इति गौतमीयं सूत्रं "दशाहादौ व्यतीते अपरेद्युः प्रभाते सङ्गवे यद्यन्यदापतेत्तत्रातिसृभी रात्रिभिः शुध्येरन्" इति व्याचष्टे। [तस्येव] मुपपत्ति-आशौचिनो ह्याशौचानन्तरदिने सङ्गवे स्नानं विहितं, स्नानकालापनोद्यं चाशौचं, ततश्च स्नानात्प्राक् प्रातरप्याशौचान्तरपाते त्र्यहेण शुद्धिरिति युक्तमेव। तदेतत्स्पष्टमुक्तमग्निस्मृतौ—

> दशाहे दशमे रात्रौ शावमन्यद्यदापतेत्।
> त्र्यहाच्छुद्धिर्भवेत्तस्य प्रभाते च त्र्यहात्तथा॥
> प्रोक्तः पुरोगतः कालः प्रभातस्त्रिमुहूर्तकः।
> पुरोदयाच्च कल्पाख्यः कालः पञ्चमुहूर्तकः॥
> स्नानकाल प्रभातान्त- शावसूतकिनां स्मृतः।
> स्त्रीणां चर्चौ तु तत्कालात्प्राक् स्नानाच्च शुचिर्भवेत्॥ इति।

---

(१) नैतानि वचनानि स्मृतिसमुच्चयस्थदेवलस्मृतौ। निर्णयसिन्धौ विद्वन्मनोहरायां च "अन्तरातु" (परा० ३-२९) इतिश्लोकव्याख्यायां देवलनाम्ना दृश्यन्त एव। तत्र निर्णयसिन्धौ 'स्याद्विद्व्यहात्स' इत्यत्र 'स्याहर्द्वयात्स' इति पाठः। विद्वन्मनोहरायां तु यतद्ग्रन्थसमानः पाठः।

अस्यार्थः-दशमे दिन इति शेषः । शावे इति सूतकस्याऽप्युपलक्षणम् । प्रभाते इत्यत्राऽपेक्षितं प्रभातलक्षणमाह-उदयात्पूर्वं पञ्चमुहूर्तः उदयात्पुरोगतः, उदयानन्तरभावी च त्रिमुहूर्तः कालः प्रभात इत्यर्थः । स एव च कल्पाख्यः । शावं च सूतकं च शावसूतके ते विद्येते येषां ते शावसूतकिनः । तेषामाशौचानन्तरदिने स्नानकालः प्रभातान्तः प्रभातस्य अन्तो येनाऽसौ प्रभातान्तः सङ्गव काल इत्यर्थः ।

स्त्रीणामपि च स एव स्नानकालः । "सङ्गवे स्नानमाचरेत्" (षड०) इति वक्ष्यमाणात् । तुशब्देन तत्स्नानकालान्तरमप्याह-तत्कालात्सङ्गवकालात्प्राक् च मातरपि रजस्वला स्नानाच्छुचिर्भवतीत्यर्थः ॥ २० ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामकविनायकपण्डितकृतायां षडशीतिविवृतौ शुद्धिचन्द्रिकायां सूतकप्रकरणं समाप्तम् ।

एवं यथोद्देशसूतकं निर्णीय मृतकं निर्णिनीषुः सूतकान्तरनिर्णयप्रसङ्गेन बुद्धिस्थं मृतकसङ्करनिर्णयं तावदाह—

शावेऽपि तुल्यं न्यूनं वा शावं पूर्वेण शुध्यति ।
अधिकं तु स्वकालेन रात्रिशेषादि पूर्ववत् ॥ २१ ॥

शावेऽपीति । प्रक्रान्तशावाशौचेऽपि तुल्यकालं न्यूनकालं वा शावाशौचमन्तरा पतति चेत्तदा पूर्वशेषेणाऽपैति । तदाह मनुः—

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ॥ (मनु० ५-७९) इति ।

याज्ञवल्क्योऽपि—

अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति । ( या० ३-२० ) इति ।

तथाऽल्पाशौचमध्ये दीर्घाऽऽशौचपाते तु स्वकालेनैव तदपगमो न पूर्वशेषेण । यथा अधिकं "अघवृद्धिमत्"इत्यनन्तरोक्तरीत्या व्याख्येयम् । अत्राऽपि रात्रिशेषे द्व्यहात्प्रभाते त्र्यहाच्छुद्धिरित्यादिकं सूतकनिर्णयवदेव ज्ञेयम् ॥ २१ ॥

आशौचसङ्करे पूर्वशेषेण शुद्धिः पुरुषविशेषेणाऽपवदति—

पूर्वशेषेण या शुद्धिः सूतिनां मृतिना तथा ।
सूतिकामपिदं हित्वा मेतस्य च सुतानपि ॥ २२ ॥(१)

(१) 'पूर्वाशौचेन' इति क्वचित्पाठः ।

पूर्वशेषेणेति। सूतं मृतं-चाऽस्ति येषां ते तथा तेषां सूतिनां मृतिनां च सर्वेषां सा आरण्येनाऽऽशौचसङ्करे पूर्वशेषेण या शुद्धिरुक्ता सा सूतिकामभिद्= दाहकर्तारं, प्रमीतस्य पुत्रांश्च विहाय भवतीति क्रमम्। सूतिकेति स्वभर्तुरप्युपलक्षणम्। तथाच वसिष्ठः—

पित्रोस्तु दशरात्र स्यात्सूतकं तु विधीयते।
अस्पृश्यत्व ध्रुव मातुरसृग्दर्शनसम्भवात् ॥ इति। (१)

सूतक कर्मस्पर्शायोग्यत्वं तदुभयमपि मातुर्दशाहं ध्रुवम्। रजोऽनुवृत्ते। पितुस्तु दशाह कर्मायोग्यत्वमेव, न स्पर्शायोग्यत्वम्। तस्य स्नानेनाऽपगमात्। तदुक्तम्—

पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्। (या० ३-१९)
रजस्तत्राऽशुचि ज्ञेयं तच्च पुंसि न विद्यते। (वसि०४-२१) इति।

तेनैव रजस एवाऽशुचिताबोधनेनिवृत्तावेव शुद्धिर्न तु पूर्वाऽऽशौचशेषेणेति। तदेतत्स्पष्टमाह देवल —

सूतिकानां भवेच्छुद्धिः कालेनैव रजःक्षये।
नाऽऽशौचान्तरपातेन सूतके मृतकेऽपि च ॥ इति। (२)

आशौचान्तरपातेन न शुद्धिः। पूर्वशेषेणेति शेष। इदं च सूतके मृतकेऽपि ज्ञेयमित्यर्थः। अयमिति दः सपिण्डे ज्ञेयः। तथाच शातातपः—

सपिण्डानां तु यः कश्चिद्गृहेऽथ दहेत वा।
तस्याऽऽशौचं दशाहं तु नाऽऽन्याशौचेन शुध्यति ॥ इति (३)

नाऽन्याशौचेन प्रक्रान्तेनेत्यर्थः। अत एव देवलोऽपि—

विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम्।
तेषां करोति य कश्चित्तस्याऽऽधिपय न विद्यते ॥(४)

इत्यादिवाक्योपलक्षितन्यूनत्वमपि प्रतिषेधति ॥ २२ ॥

चतुर्थचरणार्थ विवृणोति—

पूर्वेण चाऽपरेणापि पित्रोः शावेन हीतरत्।
आशौचं शुद्धिमाप्नोति न पित्रोः शावमन्यतः। ॥ २३ ॥

---

(१) नाऽयं स्मृतिसमुच्चयस्थवसिष्ठस्मृतौ श्लोकः।
(२) नाऽयं स्मृतिसमुच्चयस्थदेवलस्मृतौ प्राप्तः श्लोकः।
(३) नाऽयं स्मृतिसमुच्चयस्थशातातपस्मृतौ श्लोकः।
(४) नाऽयं स्मृ० स० स्थदेवलस्मृतौ श्लोकः।

पूर्वेणेति । मक्रान्तेनाऽऽगन्तुकेन वा पित्रोः शावाऽऽशौचे दाऽन्यदीयमाशौचमपैति । पित्रोः शावाशौचं पुनरन्याऽऽशौचेन नाऽपैति । तदुक्तं स्मृत्यन्तरे—

त्र्यहादि लघु शावं तु दशाहेण हन्यते ।
तदप्यपरशावं तु पित्रोः शावेन हन्यते ॥ इति ॥

अपरशावं पित्रोः शावेन हन्यते इति वदता नान्यशावेन पित्रोः शावं हन्यते इत्युक्तं भवति । तस्याधशुद्धिमत्त्वात् ॥ २३ ॥

पित्राशौचयोः परस्परसंनिपाते निर्णयमाह—

मात्राशौचस्य मध्ये चेत्पिता प्रेतत्वमाप्नुयात् ।
पितुर्मरणमारभ्य पुत्राणां दशरात्रकम् ॥ २४ ॥(१)
पित्राशौचस्य मध्ये तु यदि माता प्रमीयते ।
दशाहात्पैतृकादूर्ध्वं मृतके पक्षिणी भवेत् ॥ २५ ॥

मात्राशौचेति । मात्राशौचमध्ये पितृमरणे तद्दिनमारभ्य पुत्राणां दशाहमाशौचं न मात्राशौचशेषेण शुद्धिः । तदाह शङ्खः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥ इति । (२)

मात्राशौचमध्ये पितृमरणे पित्राशौचशेषेणैव शुद्धिः पित्राशौचमध्ये मातृमरणे पूर्वाशौचात्पक्षिण्यधिकेत्यर्थः । 'पित्राशौचेनैव शुद्धिः' इति ललितः । 'तत्र मातृमरणं रात्रिशेषे यामशेषे वा पित्राशौचे भवति तदा द्विरात्रत्रिरात्राभ्यामेव शुद्धिर्न पक्षिण्यधिका । तत्रैवान्तर्भावात् । गुरुणा लघु शुध्येदिति (?)वचनाच्चेति भट्टमालुकः ॥ २४ ॥ २५ ॥

पित्राशौचमध्ये मातृमरणे पक्षिण्यधिकेत्यस्याऽपवादमाह—

मृतं पतिमनुव्रज्य पत्नी चेज्ज्वलनं गता ।
न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ॥ २६ ॥

---

(१) 'माप्नुयात्' इत्यत्र 'मृच्छति' इति क्वचित्पाठः ।

(२) नाऽयंश्लोकः स्मृ० स० स्यशङ्खस्मृतौ । विद्वन्मनोहरायां "अन्तरा तु" (परा० ३-२९) इति श्लोकव्याख्यायां मिताक्षरायां "अन्तरा" (या० ३-२०) इति श्लोकव्याख्यायां रघुनाथभट्टकृतायां त्रिंशच्छ्लोकीव्याख्यायां निर्णयसिन्ध्वादिग्रन्थेषु च श्लोकोऽयं शङ्खनाम्ना लभ्यत एव ।

मृतमिति । मृतं पतिमुद्दिश्य यदि पत्न्यग्निं प्रविशति तदा पक्षिणी न कार्या किन्तु पितृमरणाऽऽशौचकालेनैव शुद्धिः ।

मृतं पतिं समुद्दिश्य यदि पत्नी प्रमीयते ।
आशौचं पिण्डदानं च युगपत्तु समापयेत् ॥

इति स्मरणात् ॥ २६ ॥

अनुगताग्निदस्याहस्तदाशौचं प्रसङ्गेनाह—

पुत्रोऽन्यो वाऽग्निदस्तस्यास्तावदेवाऽशुचिस्तयोः ।
नवश्राद्धं सपिण्डान्तं समाप्यं स्यात्सकृद्द्वयोः ॥ २७ ॥

पुत्रोऽन्यो वेति । तस्या अनुगतायाः पुत्रोऽन्यो वा सपत्नीपुत्रादिः सपिण्डो योऽग्निं ददाति स तावदेव यावत्पत्युराशौचमशुचिः ।

"सपिण्डानां तु यः कश्चिद्वहेताथ दहेत वा ।
तस्याऽऽशौचं दशाहं तु"

इतिशातातपस्मरणात् ।

प्रासङ्गिकान्तरमाह—तयोः सह मृतयोः दम्पत्योर्नवश्राद्धादिसपिण्डीकरणान्तं कर्मजातं युगपदेव समाप्नुयात्समापयेन्नाग्रपश्चाद्भावेन । तदाह भृगुः—

या समारोहणं कुर्याद्भर्तुश्चित्यां पतिव्रता ।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डेन योजयेत् ॥
प्रत्यब्दं तु नवश्राद्धं युगपत्तु समापयेत् ॥ इति ।

अत्रोभयोरेकदिनमरणे समानकालत्वात्सिद्धेऽपि युगपत्समापने यत्पुनर्वचनं तद्दशाहान्तर्दिनभेदेनाऽपि मरणे सहगमननिमित्ते युगपत्समापनार्थमिति । तदेव स्पष्टमाह देवलः—

एकाग्निमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिण्डनं त्रिपक्षे स्यादनुयातमृतेर्विना ॥ इति(१)

पित्रोर्मध्ये एकस्याग्रे मृतौ परस्य पश्चान्मृतौ त्रिपक्षे सपिण्डनम् । अनुगमनमरणे तु तादृशेऽपि सहैवेत्यर्थः । अत्रायमभिसन्धिः-प्रथमदिने पितरि मृते द्वितीये तृतीये वा दिने तमादाय सहगतायामनुगतायां वा मातरि पितृमरणदिनमारभ्य पितुर्नवश्राद्धादिकं मातृमरणदिनमारभ्य, मातुश्च नवश्राद्धादिकं [न] समापयेत् । किंतु पितृमरणादिनगणनयैव समापयेत् इति । तथ्था पितृस्थानीयब्राह्मणाय पाद्यं दत्त्वा पश्चान्मातृ-

(१) नाऽयं श्लोकः स्मृ० स० इपद्देवलस्मृतौ लभ्यते ।

स्थानीयब्राह्मणायेत्येवं क्रमेण विसर्जनान्तं युगपच्छ्राद्धद्वयं समापयेत् इति। तदाह लौगाक्षिः—

मृताऽहनि समासेन पिण्डनिर्वपणं पृथक्।
नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु॥ इति।

दम्पत्योरन्वारोहणे मृताऽहनि पृथक् पिण्डनिर्वपणं कुर्यात्। पूर्वोक्तभृगुवाक्यात्। नवश्राद्धं तु समासेनेति। व्यतिषङ्गेणेत्यर्थः। यद्वा समासेन सङ्क्षेपेण, एकेनैव पिण्डेनेत्यर्थः। तथाचाग्निस्मृतिः—

एकचित्यां समारुह्य मृतयोरेकवह्निवि।
पित्रोः पिण्डान्पृथग्दद्यात्पिण्डं वाऽपत्सु तत्सुतः॥ इति।

अत्र च दम्पतिपदमहिम्ना एकानेकसापत्नमातृभिरन्वारोहणे कृतेऽप्ययमेव विधिः। अन्यथा जनन्यारोहण इति मूयादिवि मदनः। अत एव धर्मप्रवृत्तौ—

उत्तरीयं शिला पात्रमग्निश्चैव तथा चरुः।
एक एव भवेत्कर्ता दम्पत्योः सहयायिनोः॥
नवश्राद्धं सपिण्डान्तं श्राद्धषोडशकं तथा।
एक एव सुतः कुर्याद्दम्पत्योस्तु पृथक् पृथक्॥ इति।

अस्या एव स्मृतेरर्थं सञ्जग्राह स्मृत्यर्थसारः—"सहदहने तु पिण्डश्राद्धादौ पाकैक्यं कालैक्यं कर्त्रैक्यं भवति" इति। "स च ज्येष्ठ एव" इत्युपपादितं श्राद्धकल्पलतायाम्। इदं च भर्तृसमानजातीयासहगमने विजातीयासहगमने वक्ष्यमाणत्वात्॥ २७॥

सपिण्डनान्तं कर्मजातं युगपत्समापयेत् इत्युक्तम्। तत्र कस्य केन सपिण्डनमित्याकाङ्क्षायामाह—

भर्तुः पित्रादिभिः कार्यं भर्त्रादिभिरथ स्त्रियाः।
सापत्न्या वाऽनपत्या वा न भेद इति गोभिलः॥ २८॥

भर्तुरिति। भर्तुः पुरुषस्य। प्रेतैः पित्रादिभिः सपिण्डनं कार्यम्। तदाह विष्णुः-"अथ सपिण्डीकरणम्" इत्युपक्रम्य "संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय ब्राह्मणान् देवपूर्वान् सर्वान् भोजयेत्" इति। "स्त्रीणामसुते सपिण्डनं नास्ति" इति विज्ञानेश्वरः(१)। तद् मातापितृभर्तृव्यतिरिक्तविषयम्।

(१) "गन्धोदक" "ये समाना" (या० १-२५३-२५४) व्याख्यायां मिताक्षरायां स्पष्टमेतत् इत्यर्थः।

व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ॥

इतिस्कन्दपुराणात् । स्त्रियास्तु सपिण्डनं भर्तृतत्पितृतत्पितामहैः सह कार्यम् । यत्तु—

भर्त्रा चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः (१) ।

इति यमेन ।

स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं भवेत् (२) ॥

इति हारीतेन च केवलं भर्तृपदमुपात्तं, तत्पित्रादीनामप्युपलक्षणार्थम् । एकपदं च भर्तृगणेनैव न गणान्तरेणेत्येवमर्थं न तु भर्तृपित्रादिनिराकरणार्थम् । यद्वा मूलवाक्यं त्रिष्वपि प्रमीतेषु त्रिभिः सहेत्येवमर्थम् । यमादिवाक्यं तु भर्तुः पित्रादिषु जीवत्सु भर्तृमात्रे प्रेते तेनैव सहेत्येवमर्थम् । न चैकेन सपिण्डनं नास्तीति वाच्यम् ।

त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।
पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥

इति सुमन्तुना व्युत्क्रममृतस्यैकेनापि सपिण्डने पितृत्वप्राप्तिबोधनात् । "तदेतत्पत्या सह सपिण्डनं पृथक्चित्यारोहणविषयम् । एकचित्यारोहणे तु पतिपिण्डदान एव तन्नामग्रहणेन तत्सपिण्डनस्यापि जातत्वात्" इति शङ्खधरः । पत्युद्देशेन दिनान्तरमरणविषयमेव वक्तुं युक्तम् ।

मृता याऽनुगता नाथं सा तेन सहपिण्डताम् ।
अर्हति स्वर्गवासेऽपि यावदाभूतसंप्लवम् ॥ (३)

इति शातातपस्मरणात् । "नाथमनुलक्षीकृत्य न तु पश्चात्" इति लोल्लटः । विज्ञानेश्वरोऽप्येवमेवाह । अत्राऽपरो वक्तव्यो विशेषः श्राद्धकल्पलतायामेव सविस्तरमाविष्कृत इति नेहोच्यते । ननु—

अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषापि च ।
तेषां सपिण्डनामावादेकोद्दिष्टं न पार्वणम् ॥

---

(१) वचनमिदं स्मृ० स० यमस्मृतौ नास्ति । परन्तु "गन्धोदक" "प्रेतसमाना" (या० स्मृ० १-२५३ । २५४) व्याख्यायां मिताक्षरायां समुद्धृतं लभ्यत एव यमनाम्ना वचनमिदम् । तत्र 'भर्त्रा' इत्यत्र 'पत्या' इति पाठः ।

(२) वचनमिदं स्मृ० स० हारीतस्मृतौ नास्ति ।

(३) नास्तीदं वचनं स्मृ० स० शातातपस्मृतौ ।

इत्यादिना पुत्राणां सपिण्डननिषेधात्कथमिदमविशेषेणोच्यते इत्याह–सापत्येति। सा स्त्री सापत्या सपुत्रा, अनपत्या अपुत्रा वा भवतु सपिण्डने न कोऽपि विशेषः इति गोभिलः प्राह। स्त्रीपदमुपलक्षणं तेन पुरुषस्याप्यपुत्रस्य सपिण्डनं भवत्येव। अपुत्रादिवाक्यानां तु पुत्रोत्पादनविधिशेषत्वेन, एकोद्दिष्टविधिशेषत्वेन वा स्वार्थपरत्वाभावात्। भाष्ये वा—

पुत्राऽभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्।
सपिण्डीकरणं तत्र ततः पार्वणमन्वहम्।
अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम्॥

इत्यादिवाक्यैः सपिण्डनविधानादष्टदोषदुष्टविकल्पापत्तेरिति माधवाचार्यस्वरसः॥ २८॥

"भर्त्रादिभिस्सह स्त्रीसापिण्ड्यम्" इत्यस्य क्वचिदपवादमाह–

द्विजा भर्त्रादिभिर्योज्या शूद्रा तु स्त्रीभिरेव हि।
नोद्वाहभेदाद्भेदः स्यादित्याङ्गिरसभाषितम्॥ २९॥

द्विजाभर्त्रादिभिरिति। ब्राह्मणादीनां सवर्णस्त्रीपरिणयने ब्राह्मणी क्षत्रिया वैश्या च द्विजातिस्त्री द्विजैर्भर्त्रादिभिर्योजनीया। शूद्रा पुनर्द्विजातिभार्या स्त्रीभिस्तन्मात्रादिभिर्योजनीया। ननु—

तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डता।
आसुरादिविवाहेषु विप्राणां योषितां स्मृता॥

इति शातातपेन (१)विवाहविशेषेणैव तन्मात्रादिभिः सापिण्ड्यमुक्तं तत्कथं वर्णविशेषस्त्रीविषयत्वेन व्यवस्थोच्यते इत्यत्राह–नोद्वाहेति। उद्वाहभेदात्=विवाहविशेषात्। तन्मात्रादिभिः सापिण्ड्यमिति यो भेदः स नेत्याङ्गिरसमतम्। उक्तं च स्मृत्यन्तरे—

ब्राह्मणी क्षत्रिया वैश्या योजनीया स्वभर्तृभिः।
शूद्रा स्वमातृभिर्योज्या सर्ववर्णेष्वयं विधिः॥ इति।

युक्तं चैतत्। शूद्रस्य द्विजैः सह सपिण्डने द्विजानामपि शूद्रतापत्तिश्रवणात्। तदाह शङ्खः—

नीयते च सपिण्डत्वं येषां शूद्रः कुलोद्भवः।
सर्वे शूद्रत्वमायान्ति यदि स्वर्गजितोऽपि ते (शं० ४-११) इति।

न चैवं शातातपीयवचनविरोधः तन्मात्रादिसापिण्ड्ये निमित्तान्तरबोधकत्वात्। तदुक्तं भवति—द्विजातिभार्यायाः शूद्रायाः तन्मात्रादि-

(१) वचनमिदं नास्ति स्मृ० स० शातातपस्मृतौ।

भिः सापिण्ड्यं, तथा ब्राह्मण्यादीनामप्यासुरादिविवाहोढानां तन्मात्रादिभिरेवेति। एतेन "स्त्रीभिरेव हि" ( षड० श्लो० २९ ) इत्यत्र अपदं पितामह्यादिपरम्।

ब्राह्मादिषु विवाहेषु या वृद्धा कन्यका भवेत्।
तस्याः सपिण्डीकरणं पितामह्या सहोदितम्॥ (१)

इति यमस्मरणात्" इति व्याख्यानं निरस्तम्। शाङ्गोकदोषापत्तेः॥२९॥

सहगमनमृताया नवश्राद्धं सपिण्डनान्तं युगपत्समापयेत् इत्युक्तं, इदानीमनुगमनमृताया विशेषमाह—

पृथक्चितिं समारोहेत्काचिद्ब्राह्मणी यदि।
तस्या एव यथाकालं तत्सापिण्ड्यान्तमाचरेत्॥ ३०॥

पृथक्चितिमिति। अब्राह्मणी क्षत्रियादिजातीया ब्राह्मणादिभार्या पृथक्चितिमारुह्य यदि म्रियते तदा तत्तज्जात्युक्तमेवाऽऽशौचकालमादाय तत्तज्जात्युक्तमेवावयवपिण्डादिसपिण्डनान्तं कुर्यात्। यद्यप्यनुलोमजानां विभागात् प्राक् पैतृकमेवाशौचं, तथापि विभागवत्पितृमरणस्यापि मातृजातीयाऽऽशौचप्राप्तिनिमित्तत्वमभिप्रेत्योक्तं तस्या एव यथाकालमिति। यथावर्णमाशौचकालः प्रागुक्तः। प्रतिवर्णं पिण्डविशेषमाह पारस्करः—

ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः॥ इति।

तथाऽस्थिसञ्चयनेऽपि विशेषमाह ब्रह्मपुराणम्—

कुर्युस्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च।
पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि॥
अस्थ्नां तु सञ्चयः प्रेते क्रियते देशगौरवात्॥ इति।

नवश्राद्धेष्वपि विशेषो भविष्यपुराणे—

नव सप्त विप्रां राज्ञां नवश्राद्धाननुक्रमात्।
आद्यन्तयोर्वर्णयोस्तु पडित्याहुर्मनीषिणः। इति।

तदेवं प्रतिवर्णमाशौचकालेऽवयवपिण्डादौ च भिन्ने सति क्षत्रियादिजातीयब्राह्मणादिभार्याणां तत्तज्जात्युक्तमेव कालमादाय तज्जातीयकर्मजातमनुष्ठेयं, न पतिजात्युक्तकालादिकमादायेति निर्गलितोऽर्थः। एतेन सवर्णायाः पत्या सहैकचित्यारोहणं, असवर्णायाः पृथक्चित्यारोहणमेवेत्यपि ध्वनितम्। अभ्युपगत च स्मृत्यर्थसारेणापि यथा शुद्ध-

(१) वचनमिदं नास्ति स्मृ० स० यमस्मृतौ।

हतं पतिमादाय या म्रियते तस्या अप्याशौचपिण्डादिविधिः स्वकाल एव समापनीय इत्युक्तं न पत्याशौचपिण्डादिविधिवत्सद्यः समापनं तस्याः। युद्धहतत्वाभावात्। (१)उक्तं च वृद्धशातातपेन—

युद्धे हतं पतिं वीरं यदि स्त्र्यनुगता तदा।
आशौचं पिण्डयज्ञश्च कथं कार्यौ भवेदिह॥

इतिप्रश्नपूर्वकमुत्तरम्—

दग्ध्वा सहैव तां विप्राः स्वस्वकाले समापयेत्॥ इति।

स्वस्वकाल इत्यनेन युद्धहतस्य सद्यःशौचपितृयज्ञौ समाप्यौ अनुगतायास्तु स्त्रियाः स्वजात्युक्तकालेनैवाऽऽशौचपिण्डयोः समापनमिति॥ ३॥

ननु भर्त्रादिभिः स्त्रियाः सापिण्ड्ये तस्याः पार्वणं कैस्सह कर्तव्यमित्यपेक्षायामाह—

कृते पित्रादिसापिण्डये मातुः श्राद्धं पृथग्विधौ।
मृताहादौ तथा मातुः पितामह्यादिभिः क्रमात्॥२१॥

कृतइति। मातुः सापिण्ड्ये पित्रादिभिः पित्रा पितामह्या मातामहेन मातामह्या वा कृते पृथग्विधिकर्तव्यतोपदेशो यस्मिंस्तादृशे मृताहादौ मृताहान्वष्टक्यवृद्धिगयासु मातुः श्राद्धं क्रमात्पितामह्यादिभिस्तथाचरेदितिपूर्ववाक्यक्रियातिदेशः। (२)तदाह शातातपः—

नान्दीमुखेऽष्टकाश्राद्धे गयायां च क्षयेऽहनि।
पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेत्॥ इति।

मृताहादौ पृथग्विधिश्च स्मृत्यन्तरे—

अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह॥ इति।

ततश्च येन केनाऽपि सापिण्डये मातुः पार्वणं पितामह्यादिभिरेवेति तत्त्वम्। ननु एकमूर्तित्वात् पतिसपिण्डीकरणे कृते—

पत्नी पतिपितॄणां तु तस्मादंशेषु भागिनी।

(३) इति शातातपेन मातुर्मातामहसापिण्ड्ये तच्छ्राद्धमपि पितृभा-

(१) वचनमिदं नास्ति स्मृ० स० वृ० शातातपस्मृतौ।
(२) नास्तीदं वचनं स्मृ० स० शातातपस्मृतौ।
(३) नास्तीदं वचनं स्मृ० स० शातातपस्मृतौ।

द्दषत्रित्यमुक्तम् । तथा च मातृमातामहप्रमातामह इति पार्वणं भवतीति चेत् सत्यम्, तस्य पुत्रिकापुत्रविषयत्वात् । (१)तदाह बौधायनः—

आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये च पितुस्तस्यास्तृतीये च पितामहम् ॥ इति ।

ततश्च मातामहेन मातुः सपिण्डनमपि पुत्रिकापुत्रविषयमुपपन्नम् ।

जीवत्पिता पितामह्या मातुः कुर्यात्सपिण्डनम् ।
प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः ॥

इतिस्मरणात् । तत्पित्रा=मातृपित्रेत्यर्थः ॥ ३१ ॥

एवं मासङ्गिक परिसमाप्य प्रकृतमनुसरन् विदेशस्थस्याशौचनिर्णयमाह—

पित्रोर्मृतिश्रुतावन्तर्दशाहे शेषतः शुचिः ।
श्रवणादिदशाहान्तमिति यत्तदसाम्प्रतम् ॥३२॥

पित्रोर्मृतीति । मातापित्रोर्मरणदिनाद्दशाहमध्ये मरणश्रवणे शेषैरेव दिवसैः पुत्रः शुद्धः स्यात् । पित्रोरित्युपलक्षणम् । तेनाऽन्याऽऽशौचेऽपि शेषेण शुद्धिः ।

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ (मनु०५-७५)

इतिमनुना सामान्येनाभिधानात् । विगतं मृतम् ।

अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च ।
अनिर्गते दशाहे तु शेषाहोभिर्विशुध्यति ॥

इतिबृहस्पतिना विशेषेण ज्ञातिपदोपादानाच्च । अत्र विदेशशब्देन यत्र स्थितेन प्रथमदिने सपिण्डमरणादि न ज्ञातुं शक्यते तादृशो देश उच्यते । मृतिपदमपि जननमुपलक्षयति । "श्रुत्वा देशान्तरस्थे जन्ममरणे आशौचशेषेण शुद्धिः" इति विष्णुस्मरणात् । "अन्तर्दशाहे" इत्यनेन च दशाहानन्तरं सपिण्डजननश्रवणे नाऽऽशौचमिति ध्वनितम् ।

नाशुद्धिः प्रसवाऽऽशौचे व्यतीतेषु दिनेष्वपि । (२)

इतिदेवलस्मरणात् । पुत्रजन्मश्रवणे तु पितुरविशेषेण सर्वदा स्नानमस्त्येव ।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ (मनु०५-७७)

---

(१) वचनमिदं नास्ति स्मृ० स० बौधायनस्मृतौ ।
(२) वचनमिदं नास्ति स्मृ० स० देवलस्मृतौ ।

इतिमानवात् । दशाहपदं च स्वस्वाऽऽशौचकालोपलक्षणार्थम् । तेन क्षत्रियादीनामपि स्वाऽऽशौचशेषेणैव शुद्धिरिति । "प्रोषितश्चेत्प्रेयाच्छ्रवणात्प्रभृतिकृतोदकाः । कालशेषं समासीरन्"इतिहारीतेन सामान्याभिधानात् । अत्र केचित् "दशाहमध्येऽपि श्रवणदिनमारभ्य दशरात्रमाशौचं कार्यम् ।

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

इतिपैठीनसिना दशरात्रादिबहिर्भावानादरेण सामान्यत एव श्रवणदिनमारभ्य दशाहाभिधानात् । दशाहान्तः शेषदिनैरेव शुद्ध्यभिधानादिदं दशाहबहिर्भावविषयमर्थत एव सिद्धमिति न वाच्यम् । अन्यदेशमृतं ज्ञातिमित्युपक्रम्य शेषाहोभिर्विशुद्ध्यति इत्यभिदधता बृहस्पतिना शेषदिनशुद्धेर्ज्ञातिविषयत्वबोधनात् । अत्र च पितराविति विशेषोपादानात् । ततश्च दशाहान्तर्बहिर्वा पित्रोर्मरणदिनमारभ्यैव दशाहम् । ज्ञातीनां तु दशाहान्तः श्रवणे शेषाहोभिरेवेति । तदुक्तं विद्वादर्शेन "केचित् प्राहुर्दशाहं बहिरेव"इत्याहुः । तन्निरस्यति—श्रवणादीति ।

असमीपे पितुः प्रेतं श्रुत्वा देशान्तरे सुतः ।
तिलमिश्रोदकं कृत्वा तच्छेषेण विशुध्यति ॥ (१)

इतिशातातपेन दशाहान्तः पित्रोरपि मरणश्रवणे शेषाहोभिरेव शुद्ध्यभिधानात् ॥ ३२ ॥

*कस्तर्हि श्रवणादिदशाहान्तपक्षस्य विषय इत्यत आह—*

श्रवणादिदशाहान्तं बहिस्तु श्रवणे मतम् ।
पित्रोर्विषय एवेदमथाऽन्यविषयेऽन्यथा ॥ ३३ ॥

श्रवणादीति । मरणश्रवणदिनमारभ्य दशाहान्तमाशौचं दशाहाद्याशौचकालाद्बहिरेव श्रवण इति पूर्वाचार्याणां मतम् । इदमपि पित्रोरेव विषये नान्यविषये ।

दशरात्रे व्यतीते तु तथा चैवौर्ध्वदेहिकम् ।
पुत्रः कुर्यादशौचं तु दशरात्रमिति स्थितिः ॥ (२)

इतिशातातपस्मरणात् । *अत्रासमीप इति पूर्ववाक्यात्पितृपदमनुषज्यते ।* तस्य तदुत्तरवाक्यात् । अनेन सामान्यतः प्रवृत्तमपि पैठी-

(१) वचनमिदं नास्ति स्मृ० स० शातातपस्मृतौ ।
(२) वचनमिदं नास्ति स्मृ० स० शातातपस्मृतौ ।

नसिवाक्यं स्वविषये व्यवस्थापितम्। तदन्यविषये कथमित्यत आह–अथेति। अधिकारान्तरार्थोऽथशब्दः।

अन्येषां मातापितृव्यतिरिक्तानां आशौचकालाद्यदि मरणश्रवणेऽप्यथैव। वक्ष्यमाणो निर्णय इत्यर्थः॥ ३३॥

तमेवाह—

मासत्रये त्रिरात्रं स्यात्षण्मासात्पक्षिणी भवेत्।

अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति॥ ३४॥

मासत्रय इति। दशाहाद्याशौचकालानन्तरं मासत्रयं यावत्सपिण्डमरणश्रवणे त्रिरात्रमाशौचम्। तत ऊर्ध्वं षण्मासपर्यन्तं पक्षिणी। आगामिवर्तमानाहर्युक्ता निशा, रात्रिद्वयमध्यगतमहर्वा। दिवा श्रवणे तदहरन्तरा रात्रिरपरेद्युश्चाहः। रात्रौ श्रवणे सा रात्रिरपरेद्युरहोरात्र इतिहरदत्तः। ततो नवममासान्तादर्वागहोरात्रं, ततः संवत्सरसमाप्तिपर्यन्तं स्नानेनैव शुद्धिरिति। तदाह वृद्धवशिष्ठः—मासत्रय इत्यादि। अत्र स्नानं स्वसहचरितमुदकदानं मत्याक्षिपति। संवत्सरानन्तरमपि स्नानोदकदाने भवतः। तदाहतुः सुमन्तुयाज्ञवल्क्यौ—

संवत्सरे व्यतीते तु स्पृष्ट्वापो विशुध्यति।

सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः॥ इति।

स्पृष्ट्वा स्नात्वेत्यर्थः। अभ्युपगतं चैतद्विज्ञानेश्वरविश्वेश्वराभ्याम्। प्रदीपस्तु—

अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्। (मनु० ५-७६)

इतिमनुस्मरणात्, "श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी" (गौ० १४-१८) इति गौतमस्मरणात् "ऊर्ध्वं दशाहाच्छुत्वैकरात्रम्" (व० ४ २९) इति वशिष्ठाच्च त्रिरात्रं, पक्षिणी, एकरात्रं चेति त्रयोऽपि पक्षाः "समं स्यादश्रुतत्वात्" इति न्यायेन त्रेधा विभक्ते वर्षे आद्यमासचतुष्टये त्रिरात्रं द्वितीये पक्षिणी तृतीयेऽहोरात्रमिति व्यवस्थाप्या इत्याह। "त्रिमासत्रय" इतिवृद्धवशिष्ठवाक्यात्, (१) "आत्रिपक्षात्त्रिरात्रं स्यात्" इति।

तत्र त्रिरात्रमाशौचं भवेत्संवत्सरादन्ततः॥

ऊर्ध्वं संवत्सरार्धात्तु श्रूयते चेन्मृतः स्वकैः।

भवेदेकाहमेवात्र तच्च सन्यासिनां न तु॥ (२)

इतिदेवलवाक्यात् च कालविशेषेणाशौचविशेषावगमात्।

---

(१) नास्तीदं वचनं स्मृ० स० वृ० वशिष्ठस्मृतौ।

(२) वचनमिदं नास्ति स्मृ० स० देवलस्मृतौ।

"समं स्यात्" इति न्यायाऽनवकाशेनोक्तविभागासम्भवात्। एतेन "आद्यमासषट्के त्रिरात्रं, द्वितीये मासषट्के त्वर्द्धार्द्धविभागेन अङ्गुलविशेषयोः पक्षिण्यहोरात्रयोः "समम्" इतिन्यायेनाऽऽद्यमासत्रये पक्षिणी, द्वितीयमासत्रयेऽहोरात्रम्" इतिकल्पतरुव्याख्याऽपि नाभिख्यामलभत। तस्मादेषां सामान्यवाक्यानां विशेषवाक्येन मासत्रय इत्यादिनोपसंहार एव ज्यायानिति ॥ ३४ ॥

"अन्यविषयेऽन्यथा" (पद्य० ३३) इत्यनेन प्रतिज्ञातं निर्णीय विशेषमुपसंहरति—

ज्ञातिमृत्यौ यदाशौचं दशाहात्तु बहिः श्रुतौ।
एकदेश इदं प्रोक्तं स्नात्वा देशान्तरे शुचिः ॥ ३५ ॥

ज्ञातीति। दशाहाद्बहिः स्वस्वाऽऽशौचकालादुपरि ज्ञातीनां मातापितृव्यतिरिक्तानां मृत्यौ श्रुत यन्मासत्रये त्रिरात्रमित्याशौचमुक्तं तदिदमेकदेशे वक्ष्यमाणदेशान्तरलक्षणरहिते देशे प्रोक्तमाचार्यैः। तदाह बृहस्पतिः—

सन्निधानेऽशौचमिदं शाव सम्परिकीर्तितम्। इति।

इदमित्यनेन "मासत्रये त्रिरात्रम्" (पद्य० ३४) इत्यादेः परामर्शः। देशान्तरलक्षणरहितो देशः सन्निधानमात्र उच्यते। प्रदीपस्तु—"यत्राऽऽशौचदिन एव ज्ञायते तत्सन्निधानम्। यत्र तु तद्दिने न ज्ञायते स दूरदेशः" इत्याह। वक्ष्यमाणलक्षणे देशान्तरे तु सपिण्डानामाशौचकालानन्तरं ज्ञातिमृत्युश्रवणे मासत्रयादर्वागपि स्नानमात्रेण शुद्धिः। तदुक्तं स्मृत्यन्तरे—

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ।
मृते स्नानेन शुध्यन्ति गर्भस्रावे च गोत्रिणः ॥ इति।

बृहस्पतिरपि—

दूरदेशमृते जाते सद्यःशौचमुदाहृतम्।

इति प्राञ्चः।

वस्तुतस्तु देशान्तरमृतौ कालविशेषेणाऽऽशौचविशेषमाह पराशरः—

देशान्तरगतः कश्चित्सगोत्रः श्रूयते यदि।
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत् ॥ (परा० ३-११) इति

अस्यार्थः—सगोत्रसपिण्डः वक्ष्यमाणलक्षणे देशान्तरे गतो मेति यदि श्रूयते, मृतः श्रूयते इति यावत्। तदा दशाहादनन्तरं त्रिपक्षं यावत्त्रिरात्रम्। तदूर्ध्वं षण्मासं यावत्पक्षिणी। सा च पक्षरात्रमध्यस्थिताऽहर्द्वयं, एकदिनमध्यस्थितरात्रिद्वयं चोपलक्ष्यते। तदूर्ध्वमावर्षमहोरात्रम्।

तदूर्ध्वं सद्यः स्नानेन शुद्धिस्तत्सपिण्डानां भवति । तदाह वृद्धविष्णुः—

अर्वाक् त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् ।
अहः संवत्सरादर्वाग्देशान्तरमृते सति ॥ इति ।

दिवानिशं=पक्षिणी । देवलोऽपि—

आत्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः ।
परमेकाहमावर्षादूर्ध्वं स्नानेन शुध्यति ॥ इति ।

स्नानमुदकदानमप्याक्षिपतीत्युक्तं प्राक् । यत्तु—'देशान्तरमृतौ स्नानमित्युक्तम्' तद्वर्षादूर्ध्वमपि घटत इत्यविरोधः ॥ ३५ ॥

"मासत्रये त्रिरात्रं स्यात्" (षड० ३४) "स्नात्वा देशान्तरे शुचिः" (षड० ३५) इत्युभयोरपि पितृविषये अपवादमाह—

देशकालादिभेदेऽपि मातापित्रोर्मृतिश्रुतौ ।
श्रवणादिदशाहान्तं निर्देशत्व इति स्थितिः ॥ ३६ ॥

देशकालादीति । देशभेदे महानद्यादिना । कालभेदे मासत्रयादिना । आदिपदात्प्रेतकार्यनिवृत्तावपि । मातापित्रोर्मृतिश्रुतौ श्रवणदिनाद्दशाहान्तमाशौचम् । परन्तु निर्देशत्वे । दशरात्राद्याशौचकालातिक्रम इत्यर्थः । पूर्वं श्रवणादिदशाहान्तपक्षस्याऽऽशौचकालानन्तरविषयत्वमुक्तम्, अत्र तु देशकालभेदप्राप्ताऽऽशौचापवादेन श्रवणादिदशाहान्तपक्षाभिधानमिति न पौनरुक्त्यम् । तदाह शातातपः—

असमीपे पितुः प्रेतं श्रुत्वा देशान्तरे सुतः ।
तिलमिश्रोदकं कृत्वा तच्छेषेण विशुध्यति ॥
दशरात्रे व्यतीते तु तथा चैवौर्ध्वदेहिकम् ।
पुत्रः कुर्याद्दशौचं तु दशरात्रमिति स्थितिः ॥

पैठीनसिरपि—

पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥

स्मृत्यन्तरेऽपि—

महागुरुनिपाते तु आर्द्रवस्त्रोपवीतिना ।
अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि ॥ इति ।

प्रेतकार्यं=पिण्डाशौचादि । पित्रोरित्युपलक्षणम् । तेन दम्पत्योः सवर्णोत्तमवर्णसपत्न्योश्चेति द्रष्टव्यम् । तदुक्तं स्मृत्यन्तरे—

सम्वत्सरे व्यतिक्रान्ते सवर्णस्त्रीमृतिश्रुतौ ।
भर्तुः सम्पूर्णमाशौचं सपत्न्योश्च परस्परम् ॥ इति ।

स्मृत्यर्थसारेऽपि—"स्त्रीपुरुषयोः परस्परं त्वेवम्। सवर्णोत्तमवर्णसपत्न्योश्चैवम्" इति॥३६॥

इदानीं देशान्तरलक्षणमाह—

भाषाभेदो महानद्या व्यवधानमथाऽद्रिणा॥
त्रिंशद्योजनदूरं वा प्रत्येकं देशभेदकाः॥ ३७॥

भाषाभेद इति। भाषा लौकिकाः शब्दास्तेषां भेदो वैलक्षण्यम्। महानदी समुद्रगा तया व्यवधानम्, अद्रिणा वा व्यवधानम्, त्रिंशद्योजनदूरत्व चेत्येवं प्रत्येक देशभेदकाः। तदाह बृहस्पतिः—

महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते॥ इति।

योजनलक्षणं स्मृत्यन्तरेऽभिहितम्—

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः॥
वितस्तेर्द्विगुणोऽरत्निस्तस्मात्किष्कुस्ततो धनुः।
धनुःसहस्रे द्वे क्रोशो योजनं तच्चतुष्टयम्॥ इति।

वाशब्दात्पक्षान्तरं सूचयति। तथा च बृहस्पतिः—

देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदेके तथैव च॥ इति।

क्वचिदुक्तलक्षणसत्त्वेऽप्यपवादमाह स एव—

देशनामनदीभेदान्निकटोऽपि भवेद्यदि।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा॥ इति।

स्वाभिप्रेतं सिद्धान्तमाह—

दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा॥ इति।

अत्र केचित् "महानद्यन्तरम्" (बृस्मृ०) इत्यादिना विकल्पः। वाक्यभेदात्। किं तु समुच्चयः।

वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये।

इति कोशदर्शनात्। तेन महानदीगिरिवाचां भेदे देशभेदः। तेषां च व्यवस्था त्रिभिर्व्यवधाने त्रिंशद्योजनाभ्यन्तर एव, द्वाभ्यां त्रिंशदुपरि, एकेन चत्वारिंशदुपरि, त्रितयाऽभावे षष्टियोजनाऽनन्तरं देशान्तरम्" इत्याहुः। तेषां मूलाऽभाव एव कल्पनामूलमुन्मूलयतीत्युपेक्षणीयाः॥३७॥

सापत्ने मातरि विशेषमाह—

मातुः सपत्न्यां वृत्तायां यावत्संवत्सरं त्र्यहम् ।
एवमौरसपुत्रे स्यादुपनीतो यदि त्वसौ ॥ ३८ ॥

मातुः सपत्न्यामिति । मातुः सपत्न्यां=सापत्नमातरि । वृत्तायां प्रमीतायाम् । यावत्संवत्सरं संवत्सरमभिव्याप्य त्रिरात्रमाशौचं भवति । यावत्संवत्सरमितिवदता संवत्सरानन्तरमाशौचान्तरं ध्वनितम् ।

तदुक्तं धर्मप्रवृत्तौ—

सापत्नमातृमरणे दशाहाद्य बहिः श्रुते ।
प्रथमेऽब्दे त्रिरात्रं स्याद्द्वितीये चाऽथ पक्षिणी ॥ इति ।

तदेतद्देशान्तरविषयं, प्रक्रमात् । समानदेशश्रवणे त्वब्दाऽनन्तरमपि त्रिरात्रमाशौचम् ।

तदाह दक्षः—

पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः ।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ॥ इति ।

यद्वा इदमपुत्रसापत्नमातृविषयमस्तु—

पितृपत्न्यामपेतायामपुत्रायां कथंचन ।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत् ॥

इतिधर्मप्रवृत्तिस्मरणात् । अत्राऽपिशब्देनार्वाक् संवत्सरं त्रिरात्रमर्थसिद्धमेवेति ध्वनितम् । तदेव यावत्संवत्सरमित्यनेन मूले स्पष्टीकृतमिति न विरोधः । हीनवर्णायामपि सापत्नमातरि त्रिरात्रमेवाह स्मृत्यर्थसारः—"देशान्तरे कालान्तरे च हीनवर्णाया मातुः सपत्न्या मरणे पुत्रस्य त्रिरात्रम्" इति । हीनवर्णसपत्नीमरणे इत्येतद्व्यातिदिशति "हीनवर्णसपत्नीषु चैवम्" इति । उक्ताऽऽशौचमन्यत्राप्यतिदिशति-औरसे इति । औरसपुत्रे देशान्तरे प्रमीते संवत्सरादन्तर्बहिर्वा श्रुते पित्रोरेवं त्रिरात्रमेव ।

पितुः पत्न्यां प्रमीतायामौरसे तनये तथा ।

इति ब्रह्मपुराणात् । तथा=त्रिरात्रम् । औरसपदोपादानादनौरसानां दत्तकादीनामशौचाभावमेवेति मन्यते ।

तदाह याज्ञवल्क्यः—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । (या० ३-२५) इति ।

अहोरात्रमित्यनुवर्तते । एतच्चासंनिधाने । सन्निधाने तु त्रिरात्रं भवति । पूर्वोक्ताऽतिक्रान्ताऽऽशौचविशेषमाह-उपनीत इति । असौ विदेशमृतो यद्युपनीतः स्यात्तदैवातिक्रान्ताऽऽशौचं भवति नान्यथा । तुश-

च्छेनाऽव्यवहितपुत्रपरामर्शं विच्छिद्य सर्वनाम्ना अदसा बुद्धिस्थस्य विदेशस्थस्यैव परामर्शात्। तथाऽतिक्रान्ताशौचं सर्ववर्णसाधारणम्।

तदाह व्याघ्रपादः—

तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च।
उपनीते तु विषमं तस्मिन्नेवाऽतिकालजम्॥ इति।

अस्यार्थः—वयोनिमित्तमाशौचं "आदन्तजन्मनः सद्यः" (पद्य० ४१) इति वक्ष्यमाणमतिक्रान्ताशौचं "मासत्रये त्रिरात्रम्" (पद्य० ३४) इति च सर्ववर्णसाधारणम्। उपनीते तु स्वस्वजात्याऽऽशौचं दशाहादि। स्त्रीशूद्रयोस्तूपनयनाभावाद्विवाहादेव। "स्त्रीशूद्राणां विवाहादूर्ध्वम्" इति स्मृत्यर्थसारात्। अत्रापरं विशेषं वक्तव्यमग्रे वक्ष्यामः॥ ३८॥

एवं प्रसक्तानुप्रसक्तं परिसमाप्य "उपनीतो यदित्यसौ" (पद्य० ३८) इत्यनेन स्मृत्यन्तरप्रक्रान्तमनुपनीतबालाशौचमेवाह—

अथ त्वनुपनीतश्चेन्निर्दशे स्नानतः शुचिः।
सदशे शेषतः शुद्धिर्निर्दशे त्वथ कथ्यते॥ ३९॥

अथेति। अथेत्यतिक्रान्ताऽऽशौचप्रकरणविच्छेदः। प्रक्रान्तबालाऽऽशौचविशेषवचनार्थस्तुशब्दः। निर्गतो दशभ्योऽहोरात्रेभ्य इति निर्दशः तस्मिन्निर्दशे दशरात्रातिरिक्तकालेऽनुपनीतश्चेन्म्रियेत तदा सपिण्डवर्गः स्नानतः शुद्धो भवति। इदं च प्राङ् नामकरणाज् ज्ञेयम्। "प्राङ् नामकरणात्सद्यः शुद्धिः" इति वाक्यस्मरणात्। दशभ्योऽहोरात्रेभ्यः सह वर्तेत इति सदशः तस्मिन् सदशे दशाहान्तर्गतकाले शिशुमरणे शेषैरेव दिवसैः शुद्धिः। पूर्वं "छिन्ननाभे" (पद्य० १५) इत्यनेन सूतिनिमित्ताशौचमुपपादितम्। "सूतिमध्ये" (पद्य० १६) इत्यनेन तु शवनिमित्ताऽऽशौचाऽभाव उपपादितः सपिण्डानाम्। अत्र तु शेषेण शुद्ध्यभिधानम्। विश्रोरिति न पौनरुक्त्यम्। तदाह व्याघ्रपादः—

अन्तर्दशाहे जातस्य शिशोर्निष्क्रमणं यदा।
सूतकेनैव शुद्धिः स्यात्पित्रोः शातातपोऽब्रवीत्॥ इति।

स्मृत्यन्तरेऽपि—"अन्तर्दशाहोपरतस्य पित्रादीनामाशौचं तद् सूतकाहोभि" इति। गच्छतीति शेषः। अथेत्यभिधानान्तरम्॥ ३९॥

पूर्वं दशाहाऽनन्तरं नामकरणात्प्राक् सपिण्डानां शिशूपरमाऽऽशौचमुक्तम्। इदानीं दशाहानन्तरमेव विप्रेर्यावदुपनयनं शिशूपरमाशौचं

कथ्यते। एवं प्रतिज्ञाय तदेवाह—

यत्रोपनयनात्पूर्वं पुत्रः प्रेतत्वमृच्छति।
आशौचं त्रिदिनं तत्र मातापित्रोः समं तदा ॥४०॥

यत्रोपनयनादिति। दशाहाऽनन्तरमुपनयनात् प्राक् यत्र यस्मिन्देशे पुत्रः प्रेतत्वमृच्छति मरणं प्राप्नोति तत्र तस्मिन्नेव देशे मातापित्रोस्त्रिरात्रमाशौचं तदा भवति।

बालानां जातदन्तानां त्रिरात्राच्छुद्धिरिष्यते।

इतिकश्यपस्मरणात्।

वैजिकादभिसम्बन्धादनुरुन्ध्यादघं त्र्यहम्। (मनु०५-६३)

इति जनकत्वोपाधिना त्रिरात्रस्मरणाच्च। यत्तु पारस्करेण—"अद्विवर्षे प्रेते मातापित्रोराशौचं शौचमेवेतरेषामेकरात्रं त्रिरात्रं वा" (पा०गृ० १०-१,२,३) इत्युक्तं,तदपि मातापित्रोस्त्रिरात्रमन्येषामेकरात्रं ततोऽप्यन्येषां सगोत्राणां शौचमेवेति व्याख्येयम्। गुणवद्गुणवन्मातापितृविषयमिति प्राच्याः। मदनस्तु "नामकरणाऽनन्तरं पित्रोस्त्रिरात्रम्" इत्याह। तच्चिन्त्यम्। दशाहाऽनन्तरं प्राक् नामकरणात्तयोराशौचान्तरास्मरणात्। न च सद्यःशौचम्। वैजिकसम्बन्धस्य तत्राप्यविशेषात्। एतेन "नामकरणात्प्राक् तयोस्त्रिरात्रम्" इत्यमृतव्याख्याऽपि निरस्ता। नामकरणाऽनन्तरं तयोराशौचान्तरास्मरणात्। तस्माद्दशाहानन्तरमोपनयनात्पित्रोस्त्रिरात्रमविशेषेणेति। यत्रतत्रशब्दोपात्तदेशैक्यामिधानेनाऽतिक्रान्तमनुपनीताशौचं नेति ध्वनितम्। उक्तं चेतदधस्तात् "उपनीतो यदि स्वसौ" (षड० ३८) इति।

उपनीते तु विषमं तस्मिन्नेवाऽतिकालजम्।

इतिव्याघ्रपादस्मरणात्। इदं चाशौचं समं सर्ववर्णसाधारणमित्यर्थः।

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥

इत्यङ्गिरःस्मरणात्।

यद्वा दाहचौलयोः सदसद्भावयोः सममेव पित्रोर्न तारतम्येन विशेष इत्यर्थः ॥ ४० ॥

"मातापित्रोः समम्" (षड० ४०) इत्यनेन सूचितं सपिण्डानामाशौचवैलक्षण्यमाह—

आदन्तजन्मनः सद्य आचौलान्नैशिकी स्मृता।
त्रिरात्रमुपनीतेः प्रागिति भेदस्तु गोत्रिणाम् ॥ ४१ ॥

आदन्तेति । दन्तोत्पत्तेः प्राक् शिशौ प्रेते गोत्रिणां सपिण्डानां सद्यः स्नानमात्रेण शुद्धिः । इदं च दाहाऽभावे । "अजातदन्ते बाले प्रेते सद्य एव । न स्यादग्निसंस्कारो नोदकक्रिया" इति विष्णुस्मरणात् । दाहे त्वहोरात्रम् । "एकाहो दन्तजन्मनः प्राक्" इतिस्मृत्यन्तरात् ।

अजातदन्ते तनये शिशौ गर्भच्युते तथा ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥

इतियमस्मरणाच्च । यद्यप्यत्र दाहो न श्रूयते तथाऽप्यदाहे विष्णुना सद्य एवेत्यभिधानादिदं दाहविषयमर्थत एव सिद्धमेवेति ।

यत्तु पराशरेण—

दन्तजातेऽनुजाते च कृतचूडे च संस्थिते ।
अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् ॥ (परा०३-१७)

इत्युक्तं, तत् "अनुजातोऽजातदन्तः कृतचूडश्चेत्स तिष्ठति तस्याग्निसंस्कारे त्रिरात्रम्" इति व्याख्येयम् ।

यत्पुनर्मनुना—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥ (मनु०५-६८)
नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया ।
अरण्ये काष्ठवत्त्यक्त्वा क्षिपेयुस्त्र्यहमेव तु ॥ (मनु५-६९)

इत्यनेनाऽग्निसंस्काराऽभावे निखननपक्षेऽपि त्रिरात्रमुक्तम् । यच्च ब्राह्मेऽपि—

अनतीतद्विवर्षं तु मृतं भूमौ निधापयेत् ।
त्रिरात्रं बान्धवानां तु तस्याशौचं च सर्वशः ॥

इत्युक्तं, तन्मातापितृविषयम् । "बैजिकादभि" (मनु०५-६३) इतिवाक्यात् । बान्धवपदं तु मातापितृपरमेव । 'शवनिखननकारिसपिण्डविषयम्' इति सर्वज्ञनारायणः । यत्तु विज्ञानेश्वरेणास्य प्रथमवर्षकृतचौलविषयत्वमुक्तं तच्चिन्त्यम् । कृतचौलस्य दाहादिनियमेन निखननासम्भवात् । तदाह लौगाक्षिः—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया त्रयम् ॥ इति ।

किं च 'पातायां भूमौ परित्यज्य' इति, स्वयमेव पूर्वं विवरणात् । ये तु प्रथमवर्षरूपचूडाकालाऽतिक्रमे द्वितीयवर्षान्ते यावदिदमवतिष्ठते ।

निवृत्तचूडकानान्तु त्रिरात्राच्छुद्धिरिष्यते । (मनु०५-६७)

इति मनुस्मरणात् । चूडाकालत्वं च प्रथमवर्षस्य तेनैवोक्तम् ।

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात्॥ (मनु०२-३५)

इत्याहुः, तेषां "निवृत्तचूडकानाम्" (मनु०५-६७) इत्यत्र रेफापह्नवेन पाठान्तरं परिकल्प्य व्यवस्थापयतामतीव धर्मपक्षपातित्वमवगम्यते। मूलपाठस्तु "नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता" इति पूर्वार्द्धेनाकृतचूडाशौचमुक्त्वा "निर्वृत्तचूडकानाम्" (मनु०५-६७) इत्युत्तरार्द्धेन कृतचूडाऽऽशौचकथनेनैव स्पष्टीकृतः। अन्यथा "निवृत्तचूडकानाम्" इत्यनेनाकृतचूडाशौचकथने पूर्वार्द्धेन पौनरुक्त्यं दुष्परिहरमेवत्यलं परमर्मोद्घाटनेनेति। दन्तोत्पत्तेरनन्तरमाचूडाकरणाच्छिशौ प्रेते सपिण्डानां नैशिकी=निशया=अहोरात्रेण जायत इति नैशिकी शुद्धिः स्मृता पूर्वैः। अत्र प्रकरणेऽह:पदं रात्रिपदं वा अहोरात्रपरमेव। तथा च विष्णुः-"दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिः" इति। दन्तजाते जातदन्ते इत्यर्थः। आहिताग्न्यादित्वात्पूर्वनिपातः। मनुरपि—

नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता (मनु० ५-६७) इति।

एतदपि दाहाभावे। दाहे तु त्रिरात्रम्। तदाहाङ्गिराः—

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः।
दाहयित्वा तथाऽप्येनमाशौचं त्र्यहमाचरेत्॥ इति।

ब्रह्मपुराणेऽपि—

अनतीतद्विवर्षस्तु प्रेतो यत्राऽपि दह्यते।
आशौचं बान्धवानां तु त्रिरात्रं तत्र विद्यते॥ इति।

चौलानन्तरं उपनयनात्प्राक् त्रिरात्रमाशौचम्।

निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते। ( मनु० ५-६७ )

इति मनुस्मरणात्। यत्तु "ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्"(वशि०४-२९) इति वसिष्ठवचनम्। तत् "प्रथमवर्षेकृतचौलविषयम्" इति विज्ञानेश्वरः। "जातदन्तस्याग्निसंस्कारविषयम्" इति माधवाचार्यः। अयमशौचभेदो योगिनां सपिण्डानाम्। शुद्धस्य आत्मनोऽशौचवैलक्षण्यव्यवस्थापनार्थः। अथ केचित् "आदन्तजन्मशब्देन दन्तोत्पत्तिकालो लक्ष्यते। स च सप्तममासरूप.। "दन्तजन्म सप्तमे मासि" इत्युपलिपवाक्यात्। एवं चूडाशब्दोऽपि तृतीयवर्षरूपस्य कालस्य लक्षकः। "तृतीये वर्षे चौलम्" (आश्व०गृ० १-१७) इतिवचनात्। तथोपनयनशब्दोऽप्युपनयनकालोपलक्षकः। स च षड्वर्षानन्तरकालरूपः।

द्विजन्मनामयं कालत्रयाणां तु षडब्दिषः।

इतिप्रमाणात्। संस्कारपरत्वे तेषामकृतचूडस्य त्रिरात्रस्मरणम्,

नुपनीतस्य जात्याशौचस्मरणं च विरुध्येत। यथा—

यद्यव्यकृतचूडो वै जातदन्तस्तु संस्थितः।
दाहयित्वा तथाऽप्येनमाशौचं त्र्यहमाचरेत्॥

इत्यङ्गिरसा

विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकी।

इत्यनेन न्यूनत्रिवर्षस्य नैशिकीं शुद्धिमभिधाय त्रिवर्षानन्तरं त्रिरात्राभिधानात्। षड्वर्षानन्तरं "स्वजात्युक्तमतः परम्" इति प्राहेति वाक्यशेषाच्च। तस्मात् कालोपलक्षका एवैते शब्दाः इत्याहुः। तन्न। मुख्यार्थे बाधकाभावात्, कालोपलक्षकत्वे प्रमाणाभावाच्च। न च संस्काराणां देशकालकुलधर्मादिविषयेणानियतत्वान्नियताशौचावधित्वासम्भव एव मानमिति वाच्यम्। नालच्छेदनामकरणयोरपि तथात्वेन कालोपलक्षकत्वापातात्। न चास्तु तथेति वाच्यम्। नालच्छेदे नियतकालविशेषाभावेनोपलक्षणासम्भवात्। किं च नामकरणे दशद्वादशदिनानां, चूडाकरणे प्रथमद्वितीयतृतीयकुलक्रमागतवर्षाणाम्, उपनयने सप्तमाष्टमकुलक्रमागतवर्षाणां वैकल्पिकानां कथमुपलक्षणम् अनियतत्वात्?। यदि संस्कारशब्दोपलक्षितानामनियतानामपि तत्कालानां नियताशौचावधित्वं, तर्ह्यनियतानां संस्काराणामेव शब्दशक्त्युपस्थितानामाशौचावधित्वमस्तु लाघवात्, प्रथमोपस्थितत्वाच्च। नन्वेवं तृतीयवर्षानन्तरमकृतचूडस्यापि त्रिरात्राभिधानं षड्वर्षानन्तरमनुपनीतस्यापि जात्याशौचविधानं च विरुध्यते तत्र संस्काराभावादिति चेन्न। अकृतचूडेऽपि त्रिवर्षे त्रिरात्राभिधानस्य वाचनिकत्वात्। कालोपलक्षकत्वे तु प्रथमवर्षानन्तरमपि त्रिरात्रमुच्येत। षड्वर्षानन्तरमनुपेतस्य जात्याशौचविधानाभावात्। कस्तर्हि "स्वजात्युक्तमतः परम्" इत्यस्यार्थः? उच्यते।

विप्रे त्वनुपनीतस्तु राजा चैवाऽधनुर्ग्रहः।
अगृहीतप्रतोदस्तु वैश्यः शूद्रस्त्ववस्त्रयुक्॥
म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव हि।

इत्यनेन विप्रादीनामुपनयनादिभ्यः प्राक् त्रिरात्राशौचमभिधाय कियत्कालमेषामनुपनीतत्वादिकामित्याकाङ्क्षायां प्रसङ्गेन

"द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः॥

षडाब्दिकस्तु शूद्राणाम्"

इत्यनेनाऽनुपनीतत्वादिकालमभिधाय "स्वजात्युक्तमतः परम्" इ-

त्वेनोपनयनानन्तरं जात्याशौचमुच्यते इति तस्यार्थः । युक्तञ्चायम् । सप्तमवर्षस्य गर्भाष्टमत्वेनोपनयनकालत्वं, ततः प्रागनुपनीतत्वमिति । एवं धनुःप्रतोदग्रहणेऽपि व्याख्येयम् ।

सप्तमे चाष्टमे वर्षे ब्राह्मणस्योपनायनम् ।
धनुःप्रतोदग्रहणं तत्र राजविशोः क्रमात् ॥

इति ज्योतिःशास्त्रस्मरणात् । तस्माद्विप्रस्योपनयनानन्तरं स्ववृत्त्युपजीविनोः क्षत्रियवैश्ययोर्धनुःप्रतोदग्रहणानन्तरं, वृत्त्यन्तरोपजीविनोस्तु उपनयनानन्तरं वा जात्याशौचमिति । शूद्रस्य तु "अनूढभार्यः शूद्रस्तु" (षड० ६४) इत्येतद्व्याख्याने एव विशेषं वक्ष्याम इत्यलमतिविस्तरेणेति ॥ ४१ ॥

चौलानन्तरमुपनीतेः प्राक् त्रिरात्रमित्युक्तम् । यदा तु कुलधर्माऽनुरोधेनोपनयनात्प्राक् चौलं न कृतं तदा कथमित्यत आह—

चौलं न क्रियते यस्य स्वकाले तन्मृतावपि ।
चतुर्थं वर्षमारभ्य चौलाभावे ऽप्यहं समम् ॥ ४२ ॥

चौलमिति । यस्य शिशोः स्वकाले तृतीयेऽब्दे चौलं न कृतं तस्याऽपि चतुर्थवर्षप्रभृतिमरणे त्रिरात्रमाशौचम् । तदाहाङ्गिराः—

यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वा तथाऽप्येनमाशौचं त्र्यहमाचरेत् ॥ इति ॥

चतुर्थं वर्षमारभ्येति वदता प्रथमद्वितीयवर्षयोश्चौलकालत्वेऽपि न तदूर्ध्वमकृतचूडस्य त्रिरात्रमिति ध्वनितम् । एतेन स्वकालशब्देनाऽपि तृतीयवर्षमेवोक्तं भवति ।

"चौलं न क्रियते" इत्यनेनैव चौलाभावेऽवगते पुनश्चौलाभावपदमकृतचूडस्यापि वर्षद्वयानन्तरं दाहादिनियमबोधनाय । अत एव मनु—

नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।

जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति ॥ (मनु०५-७०)

इति व्यतिरेकमुखेनाह । उदकक्रियेति दाहोपलक्षणम् । तच्च सर्वं सर्ववर्णसाधारणम् ।

अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः ।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ॥

इत्याङ्गिरस स्मरणात् ॥ ४२ ॥

अकृतचूडे "आदन्तजन्म" ( पद्य० ४१ ) इत्यादिनाऽऽशौचमुक्तम् । इदानीं कृतचूडेऽप्याह—

द्वितीये प्रथमे वाब्दे चौलं यदि कृतं भवेत् ।
चौलप्रभृति सर्वेषां गोत्रिणां त्रिदिनं समम् ॥ ४२ ॥

द्वितीय इति । प्रथमे द्वितीये वाऽब्दे यस्य चौलं कृतं तन्मरणे चौलप्रभृति सर्वेषां गोत्रिणां सपिण्डानां त्रिरात्रमाशौचम् । तदुक्तं षट्त्रिंशन्मते—

यद्यप्यजातदन्तः स्यात्कृतचूडस्तु संस्थितः ।
तदाऽपि दाहयित्वैनं त्र्यहं चाशौचमाचरेत् ॥ इति ।

प्रथमद्वितीयवर्षयोस्तु चूडाकालत्वं यम आह—ततः संवत्सरे पूर्णे(?)

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ (मनु० २-३५) ॥

इति मनुस्मरणात् । त्रिदिनमिति दाहस्याप्युपलक्षणम् । अत एव लौगाक्षिः—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् । इति ॥

यत्तु (?)तुलाहरेण "प्रथमेऽब्दे कृतचूडस्याग्निसंस्कारपक्षे त्रिरात्रं पक्षान्तरे त्वेकाहः" इत्युक्तं, तच्चिन्त्यम् । लौगाक्षिणा कृतचूडस्य नित्यवदग्निसंस्कारविधानेन विकल्पासम्भवात् । विकल्पप्रतिपादकवाक्यान्तरस्य स्वयमनुद्भावनाच्च । तदपि समं=सर्वसाधारणमित्यर्थः ॥४२॥

एवं पुमपत्याशौचमुक्त्वा स्त्र्यपत्याशौचमाह—

अथ पुत्रीमृतौ चैवं मातापित्रोस्त्र्यहं सदा ।
अवस्थाभेदमाश्रित्य गोत्रिणामन्यथा स्मृतम् ॥ ४४ ॥

अथपुत्रीति । अथेति पुमपत्याशौचप्रकरणविच्छेदे । स्त्र्यपत्याशौचाधिकारो वा । एवं यथोपनयनात्पूर्वं पुत्रमृतौ तथोपनयनस्थानीयाद्विवाहात्पूर्वं पुत्र्या अपि मृतौ सदा=दशाहानन्तरं कालविशेषाऽनादरेण वाग्दानात्प्रागूर्ध्वं वा संस्कारविशेषानादरेण च चौले सत्यसति च मातापित्रोस्त्रिरात्रमाशौचं भवति ।

तदाह कार्ष्णाजिनिः—

प्रत्ताऽप्रत्तासु योषित्सु संस्कृताऽसंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि । इति ॥

प्रत्ताऽप्रत्तासु वाग्दत्ताऽवाग्दत्तासु, संस्कृताऽसंस्कृतासु कृतचौलाऽकृतचौलासु सदेति सामान्य निर्देशोऽपि त्रिरात्रविधानं जातदन्ताविषयम्। अजातदन्तासु त्वेकरात्रम्। ''अजातदन्तासु पित्रोरेकरात्रम्'' इति शङ्खस्मरणात्। यदा तु सममिति पाठस्तदा सर्ववर्णसाधारणमिति तस्यार्थः। यत्तु माधवाचार्यैः काष्र्णाजिनिवचने संस्कृताऽसंस्कृतापदे विवाहिताऽविवाहितापरत्वेनाभिप्रेत्य "संस्कृतामरणे पित्रोस्त्रिरात्रं स्वगृहमरणविषयम् "संस्कृतासु स्त्रीषु नाशौचं पितृपक्ष तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदेकरात्रं त्रिरात्रं वा" इति विष्णुवाक्याऽनुरोधात्" इति व्याख्यातं, तच्चिन्त्यम्। प्रत्ताऽप्रत्तापदाभ्यामूढानूढार्थाभ्यां पौनरुक्त्यापातात्। अथ वाग्दत्ताऽवाग्दत्तार्थत्वं तयोस्तथापि प्रत्तासंस्कृताशब्दयोः पौनरुक्त्यऽपरिहारात्। तथा हि—प्रत्तापदेन वाग्दानानन्तरा विवाहप्राक्कालीनाऽवस्थोच्यते। असंस्कृतापदेनापि सैव न वाग्दानप्राक्कालीना। तस्या अप्रत्तापदेनोक्तत्वात्। किं च एकेनैव काष्र्णाजिनिवाक्येन प्रत्ताऽप्रत्तासंस्कृतानां स्वपरगृहसाधारण्येन मरणे पित्रोस्त्रिरात्रं विधेयं, संस्कृतायाः पुनर्विष्णुवाक्यानुरोधात्स्वगृहमरणे पित्रोस्त्रिरात्रमिति विधिवैषम्यं स्यात्। यथा चातुर्मास्येषु "उभाव्र वपन्ति"इत्यनेन वाक्येन प्रथमोत्तमयोः पर्वणोः"न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीये" इति प्रतिषेधमपेक्ष्य पाक्षिकी उत्तरवेदिर्विधेया। मध्यमयोश्च वरुणप्रघाससाकमेधपर्वणोर्नित्यवद्विधेयेत्यलं बहुना। तर्हि सपिण्डानां कथमित्यत आह—गोत्रिणामिति। गोत्रिणां वक्ष्यमाणलक्षणानां सपिण्डानामवस्थाभेदं चयोऽवस्थाविशेषमाश्रित्य। अन्यथाऽवक्ष्यमाणमाशौचं स्मृतं पूर्वैः। तदुक्तम्-"इतरेषां यथाविधि" इति ॥४४॥

तदेव विवृणोति—

आचौलकरणात्सद्यस्तदूर्ध्वमहरेव तु।
चतुर्थं वर्षमारभ्य चौलाभावेऽप्यहः समम् ॥ ४५॥

आचौलकरणादिति। दशाहानन्तरमाचौलकरणाद्यावच्चूडाकरणं सद्यः-स्नानमात्रेण शुद्धिः।

अचूडायां तु कन्यायां, सद्यः शौचं विधीयते।

इत्यापस्तम्बस्मरणात्। तस्माच्चूडाकरणादूर्ध्वं वाग्दानात्प्राक् अहः अहोरात्रम्। "प्राग्वाग्दानादेकाहः" इति मरीचिस्मरणात्। "गान्धर्वादिविवाहेषु वाग्दानाऽभावाद्विवाहे एकाहः" इति प्रदीपः। यदि कथं चित्तृतीयवर्षे चौलं न कृतं तदा चौलाभावेऽपि चतुर्थं वर्षमारभ्याहोरात्रम्।

चौलाभावेऽप्याविवाहाद्वोत्रिणामहरेव तु ।

इति स्मरणात् । वाग्दानानन्तरमापरिणयनात्त्रिरात्रम् । तदाह मरीचिः—"दत्तानां प्राक् परिणयनात् त्र्यहम्" इति । तदेतद्वाग्दानानन्तरं त्रिरात्रमाशौचं पक्षद्वयेऽपिसमानम् । तदाह मनुः—

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।

यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥ (मनु० ५-७१) इति ।

असंस्कृतानां वाग्दानानन्तरमनूढानाम् । बान्धवाः पतिसपिण्डाः । सनाभयः पितृसपिण्डाः । यथोक्तेनैव कल्पेन त्रिरात्रेण । तदेतत्स्पष्टमाह मरीचिः—

वारिपूर्वं प्रदत्ताऽपि या नैव प्रतिपादिता ।

असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥ इति ।

प्रदत्ताऽपि वाग्दत्ताऽपि वारिपूर्वं न प्रतिपादितेत्यन्वयः । उभयोः पितृपतिपक्षयोः परिणीतानां तु पत्युरेव स्वजात्युक्तमाशौचं जननमरणयोरिति । तदेतत्सर्वं सङ्कलितं ब्रह्मपुराणे—

आजन्मनस्तु चौलान्तं कन्या यदि विपद्यते ।

सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥

ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।

ततः परं प्रवृद्धायां त्रिरात्रमिति निश्चयः ॥

वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।

पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥

स्वजात्युक्तमशौचं स्यात्सूतके जातके तथा ॥ इति ॥ ४५ ॥

कन्यामरणे सपिण्डानामाशौचमुक्तं तस्य कदाचिदपवादमाह—

कन्याशौचं विवाहोर्द्ध्वं पितृगोत्रे न विद्यते ।

विवाहात्प्राक्तु सापिण्ड्यं त्रिपूरुषमिति स्थितिः ॥ ४६ ॥

कन्याशौचमिति । विवाहानन्तरं कन्यायाः प्रसवमरणयोराशौचं पितृसपिण्डेषु नास्ति । तदाह विष्णुः—"स्त्रीणां विवाहः संस्कारः । संस्कृतासु स्त्रीषु नाऽशौचं पितृपक्षे" । इति । शङ्खलिखितावपि—"ऊढायां गोत्रतः पिण्डाऽशौचयोर्निवृत्तिः" इति । गोत्रतः पितृगोत्रादित्यर्थः । विवाहोर्द्ध्वं पितृषु कन्याशौचं नास्तीत्युक्तम् । तत्र कन्यासापिण्ड्ये साप्तपुरुषत्वप्राप्तौ विशेषमाह—विवाहादिति । विवाहात्पूर्वमाशौचे कन्यासापिण्ड्यं त्रिपुरुषं=त्रिपुरुषव्यापि इति स्थितिः पूर्वेषाम् । तदाह वशिष्ठः—"अप्रत्तानां स्त्रीणां त्रिपुरुषं विज्ञायते"

( वाशि० ४-१७ ) इति। विवाहात्प्रागितिवदता विवाहे सात्पौरुषमेव साषिण्डयमिति दर्शितम्। अत एव कूर्मपुराणे—

अप्रत्तानां तु नारीणां साषिण्ड्यं साप्तपौरुषम्॥

प्रत्तानां भर्तृसापिण्ड्यमेवमाह प्रजापतिः॥ इति॥

एतच्च सवर्णानाम्।

सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी॥

इतिब्रह्मपुराणात्। असवर्णानां तु वक्ष्यति। त्रिपुरुषानन्तरं कन्यामरणे समानोदकाशौचमेवेति॥ ४६॥

इतिश्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामक-
विनायकपण्डितकृतायां षडशीतिविवृतौ शुद्धि-
चन्द्रिकायां सगोत्राशौचप्रकरणम्॥

एवं सगोत्राऽऽशौचमुक्त्वाऽसगोत्राशौचं विवक्षुरनूढकन्याऽशौचनिर्णयप्रसङ्गेनोपस्थितमूढकन्याऽऽशौचं तावदाह—

यत्र तूद्वाहिता कन्या पितुर्गेहे प्रमीयते।

पित्रोस्त्रिदिनमन्येषां चाह इत्येक ऊचिरे॥ ४७॥

यत्र तूद्वाहितेति। उद्वाहिता पुत्री पितुर्गेहे स्थिता सती यत्र तु यत्र कचिद्गृहाङ्गणनदीतीरादौ म्रियते तदा पित्रोस्त्रिरात्रम्। अन्येषां सपिण्डानामहोरात्रमाशौचम्। एके ब्रह्मपुराणाऽनुयायिनो वदन्ति। तदुक्तं ब्रह्मपुराणे—

गृहे मृतासु दत्तासु कन्यकासु त्र्यहं पितुः।

दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथ वा॥

तद्बन्धुवर्गस्त्वेकेन शुध्यते जनकस्त्रिभिः॥ इति।

अत्र पितृजनकपदे जनन्या अप्युपलक्षके। कूर्मपुराणेऽपि—

पितृगेहे स्थिता नारी यदा क्वापि प्रमीयते।

विवाहानन्तरं पित्रोस्त्रिरात्रमिति निश्चयः॥

इति स्मरणात्। बन्धवः सपिण्डा उक्तलक्षणाः पितृगृहवासिनः पितृव्यादयो विवक्षिताः न भ्रातरः। तेषां गृहे त्रिरात्रस्य,अन्यत्र पक्षिण्याश्च वक्ष्यमाणत्वात्। विष्णुरपि—"संस्कृतासु स्त्रीषु नाऽऽशौचं पितृपक्षे। तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं वा" इति। पितृगृहे कन्याप्रसवमरणयोर्बन्धूनामेकरात्रं पित्रोस्त्रिरात्रमिति व्यवस्था। एक एवेन प्रसवे एकरात्रं मरणे त्रिरात्रमिति मतान्तरमपि विष्णुवाक्ये यथासंख्यन्यायेन सम्भवतीति सूचितम्। तच्च निरस्तमेव प्राक्।

यत्र तु यत्र क्वापीत्यनेन पितृप्रधानगृहभिन्नस्थले इत्युक्तम्। "पृथक्स्थाने व्यवस्थिते" इति ब्रह्मपुराणीयवाक्यशेषात् । गृहान्तरमरणे तु स्मृत्यर्थसारे—"गृहान्तरमरणे पित्रोरेव त्रिरात्रम्" इति। एवकारेण तत्र बन्धूनामाशौचनिवृत्तिः । भ्रातॄणां पक्षिणी । प्रधानगृहमरणे तु पित्रोः सम्पूर्णमेव । "स्वमशौचं तरेत्सम्यक्" इति तत्रैव शेषात् । तत्र भ्रातॄणां त्रिरात्रं बन्धूनामेकरात्रमिति । तदयं निर्गलितोऽर्थः-पितुरप्रधानगृहे कन्यामरणे पित्रोः तद्गृहवासिनां भ्रातॄणां च त्रिरात्रम्। तत्र स्थाने पितृव्यादीनामहोरात्रमेव। स्वगृहमरणे पित्रोस्त्रिरात्रं भ्रातॄणां पक्षिणी । अन्येषां न किंचित्। प्रधानगृहमरणे तु पित्रोः सम्पूर्णं, भ्रातॄणां त्रिरात्रम्, अन्येषामहोरात्रमिति। अनूढायाः रजोदर्शनानन्तरं पितुर्गृहे मरणे तु पित्रोर्याज्जीवमाशौचम्। तदाह शङ्खः—

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।

तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥ (शङ्ख०१५-८) इति।

शूद्रकन्याप्रसवमरणयोर्विशेषोऽग्निपुराणे—

शूद्रायाः प्रसवे गेहे शूद्राया मरणे तथा ।

भाण्डानि तु परित्यज्य त्र्यहादुदकतः शुचिः । इति ॥ ४७ ॥

एवं स्वगृहे पुत्रीमरणाऽऽशौचमुक्त्वाऽन्यत्र तन्मृतौ तावदाह—

पितृगेहादतोऽन्यत्र यदि पुत्री प्रमीयते ॥

पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः ॥ ४८ ॥

पितृगेहादिति । अतः प्रधानादप्रधानाच्च । पितृगेहात् अन्यत्र=भर्त्रादिगृहे इति यावत्। यदि पुत्री=ऊढा कन्या। प्रमीयते तत्र तदा पित्रोः पक्षिणी आगामिवर्तमानाऽहर्युक्ता निशा शुद्धिहेतुः स्यात्। अन्येषां भ्रातृपुत्रादिव्यतिरिक्तानां पितृव्यादीनां नाऽऽशौचमिति निश्चयः शास्त्रज्ञानाम्। तदाह पुलस्त्यः—

सद्यस्त्वप्रौढकन्यायां वासराच्छुद्धिरिष्यते ।

प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत् ॥ इति ।

प्रदत्तायां प्रक्रान्तवाग्दानायाम् । दत्तायामूढायामित्यर्थः । धर्मप्रदीपेऽपि—

सोदर्यायाः सुतायाश्च ऊढायाः पक्षिणी भवेत् । इति ।

स्मृत्यर्थसारस्तु ग्रामान्तरमरणे पक्षिणीमाह । एतेन "संस्कृतासु स्त्रीषु नाऽऽशौचं पितृपक्षे" इति विष्णुस्मरणात्, "ऊढायां गोत्रतः पिण्डाऽऽशौचयोर्निवृत्तिः" इतिशङ्खलिखितस्मरणाच्च" ऊढासु

कन्यासु मृतासु पित्रादीनां नाऽऽशौचमिति हारलताविवरणमसंवरणमेवेत्युपेक्षणीयम । वाक्यद्वयस्याऽपि पितृपक्षाशौचाभावप्रतिपादकत्वेऽपि पित्रोराशौचाभावप्रतिपादकत्वाभावात् । तथात्वे पुलस्त्यादिवचोविरोधापातात् । किं च पितृपक्षाऽऽशौचाभाववोधकस्य ज्ञात्याशौचाभावबोधकत्वं वाच्यम् । अन्यथा भ्रातृतत्पुत्रादीनां भगिनीपितृष्वस्रादिमरणनिमित्ताऽऽशौचप्रतिपादकवचनविरोधः स्यात् । तस्माद्विशेषवचनाऽभावे आशौचाऽभावबोधकमिदमिति न विरोधः । तेन विवाहात्प्राक् पित्रोस्त्रिरात्रम् । ऊर्ध्वं तु वैजिकसम्बन्धेन त्रिरात्रे प्राप्तेऽप्यनेन पक्षिणी विधीयते इति सर्वं सुस्थम् ॥ ४८ ॥

एवं पुत्रीमृतौ पित्रोराशौचमुक्त्वा इदानीं पितृमरणे पुत्र्या आशौचमाह—

पुत्र्या गेहेऽपरत्राऽन्यत्र प्रमीतौ पितरौ यदि ॥
पुत्र्यास्त्रिदिनमाशौचं दशाहाऽभ्यन्तरे भवेत् ॥ ४९ ॥

पुत्र्या इति । पुत्र्याः कन्याया गेहे । अथवेत्यनास्थायाम् । अन्यत्र पुत्रीगृहादन्यत्र क्वाऽपि । यदि पितरौ प्रमीतौ तदा ऊढाया अपि पुत्र्यास्त्रिरात्रमाशौचं स्यात् । तदाह वृद्धमनुः—

पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः ॥ इति ।

अनेन स्वपरगृहसाधारण्येन त्रिरात्रे प्राप्तेऽपि पुनः पुत्रीगेह इत्युपादानं स्वगृहमरणस्याऽप्याशौचनिमित्तत्वात् निमित्तद्वये नैमित्तिकावृत्तिशङ्कानिरासाय । निमित्तत्वं चास्य ।

गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन ।
तस्याऽप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥

इत्यङ्गिरसा स्पष्टीकृतम् । ततश्च स्वगृहमरणपितृमरणयोरसङ्कीर्णयोरपि निमित्तयोराशौचं सङ्करन्यायेन समानकालेनैव शुद्धिरिति सूचयितुं सहनिर्देशः । इदं च दशाहाऽभ्यन्तरे दशाहाद्याशौचकालमध्ये भवेत् । ऊर्ध्वं पुनः पक्षिण्येव ।

दशाहाऽनन्तरं पुत्री पक्षिण्याशौचमाचरेत् ।

इतिवाक्यात् । पितरावित्यत्र मातृपदेन जननी विवक्षिता । सापत्नमातरि तु पक्षिण्येव ।

मातुः सपत्न्यां तुल्यायामतुल्यायामदो भवेत् ।

इति तत्संयोत्तरार्धात् । तुल्या सवर्णा । अतुल्या असवर्णा ॥ ४९ ॥

इदानीं भगिनीस्वगृहे भ्रातृमरणे भगिन्या आशौचमाह—

भगिनीनिलये भ्राता मृतश्चेन्मृतकं तदा ॥

भगिन्यास्त्रिदिनं प्रोक्तं न तस्याश्च भगिनीपतेः ॥ ५० ॥

भगिनीनिलय इति। भगिनीनिलये भगिनीमात्रस्वामिके गृहे भ्राता चेन्मृतः तदा मृतकं मरणनिमित्तमाशौचं भगिन्यास्त्रिरात्रं प्रोक्तं पूर्वैः। तदाहाङ्गिराः—

गृहे यस्य मृतः कश्चिदसपिण्डः कथंचन ॥

तस्याऽप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥ इति।

यद्यसपिण्डस्यापि स्वगृहमरणे त्रिरात्राऽऽशौचं तर्हि प्रत्यासन्नमरणे सुतरां तदित्यपिनोच्यते। इदमेव स्पष्टीकृतमाचार्यैः 'भगिनीपतेः पुनः तत्त्रिरात्राऽऽशौचं न स्यात्। गृहस्वाम्याभावात्, आशौचस्य च तत्प्रयुक्तत्वात्। किं तु एकावासतानिमित्ता शालकादिसम्बन्धिनः पक्षिणी "असपिण्डे योनिसम्बन्धे सहाध्यायिनि च" (गौ० १४-१९) इति गौतमवचनात्। योनिसम्बन्धाः श्वश्रूश्वशुरशालकभगिनीपतिजामातृभागिनेयपैतृष्वसेयमातृष्वसेयादयः। एतेषामेकावासमरणे पक्षिणी। स्वगृहमरणे तु त्रिरात्रम्। अन्येषां तु स्वगृहमरणे एकरात्रमेव। "असपिण्डे स्ववेश्मनि मृते एकरात्रम्" इतिविष्णुवचनात्। अन्यत्र शालकमरणे तु एकरात्रमेव। "श्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण" इति विष्णुस्मरणात्। श्वशुर्यः=शालकः। यत्तु—

शालके तत्सुते चैव सद्यः स्नानेन शुद्ध्यति।

इति वृद्धमनुवचनं तदनुपनीतदेशान्तरस्थव्यवहितासवर्णशालकविषयमिति। एतेन 'शालकतत्सुतयोः सन्निधावेव सद्यः शुद्धिः' इति माधवोक्तमपि स्वोदाहृतविष्णुवचनाऽप्रतिसम्बन्धनिबन्धनमिति मन्तव्यम्। तदेतत्त्रिरात्रं प्रधानगृहमरणे। गृहान्तरे तु विष्णूक्तमेकरात्रमेव। तदयं सङ्कलितोऽर्थः—भगिनीमात्रस्वामिकगृहे भ्रातृमरणे भगिन्यास्त्रिरात्रम्। भगिनीपतेस्त्वेकावासतानिबन्धना पक्षिणी। उभयस्वामिके तु प्रधानगृहे उभयोरपि त्रिरात्रम्। अप्रधानगृहे तूभयोरप्येकाहः। अन्यत्र शालकमरणे त्वेकाहः। अनुपनीतविदेशस्थव्यवहितासवर्णेषु शालकेषु सद्य इति। अन्यत्र भ्रातृमरणे भगिन्या वक्ष्यामि ॥ ५० ॥

उक्तमर्थं भगिनीमरणेऽप्यतिदिशति—

एवं भ्रातृगृहे यत्र भगिनी चेद्विपद्यते ॥

भ्रातुस्त्रिरात्रमाशौचं भ्रातृपत्न्यास्तु नैव तत् ॥ ५१ ॥

एवमिति । भ्रातृस्वामिके गृहे स्थिता सती यत्र क्वाऽपि भगिनी ऊढा चेत्म्रियते तदा एवम् । एवंशब्दार्थं विवृणोति-भ्रातुरिति । भ्रातुस्त्रिदिनमाशौचम् । पूर्वोक्ताङ्गिरोवचनात् । भ्रातृपत्न्याः पुनस्त्रिरात्रं न भवति । किं तु विष्णूक्तमेकरात्रमेव ॥ ५१ ॥

एवं भ्रातृभगिन्योरन्योऽन्यगृहमरणे आशौचमुक्त्वा, इदानीमन्यत्र मरणे तदाह—

अथाऽन्यत्र मृतो भ्राता भगिनी वा विपद्यते ॥
भगिन्याः पक्षिणी तत्र भ्रातुश्चाशौचमिष्यते ॥ ५२ ॥

अथेति । अथेतिप्रतिज्ञान्तरम् । भगिनीगृहादन्यत्र भ्रातृविपत्तौ भ्रातृगृहादन्यत्र वा भगिनीविपत्तौ तत्र तन्निमित्तमाशौचं भगिन्याः भ्रातुश्च पक्षिणी इष्यते पूर्वैः । तदाह ब्रह्मपुराणम्—

परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेत् ।
मातुलाशौचवत्पुत्र्याः पितृत्वाशौचमिष्यते(?) ॥

तथा च—

श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥ इति ।

धर्मप्रदीपेऽपि—

सोदर्यायाः सुतायाश्च ऊढायाः पक्षिणी भवेत् ॥ इति ।

मनु—

भगिन्यां संस्कृतायां च भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
शालके तत्सुते चैव सद्यः स्नानेन शुद्ध्यति ।

इति गृहमानवं भ्रातृभगिन्योरन्योऽन्यं सद्यःशौचाऽभिधानं तद्देशान्तरस्थसापत्नभ्रात्रादिविषयत्वेन । (?)संस्थिते इतिपाठे असंस्कृतविषयत्वेन संस्कृते इति पाठे असंस्कृतविषयत्वेन वा व्यवस्थापनीयम् ॥५२॥

उक्तमर्थमन्यत्राऽप्यतिदिशति—

एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा ॥
ये मातामहयोश्चैव भगिन्यौ तत्प्रजाश्च याः ॥ ५३ ॥
मातुलाः स्वस्य पित्रोश्च पत्न्यश्चैषां प्रजाश्च याः ॥
मातरश्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहम् ॥ ५४ ॥

एवमिति । पित्रोर्ये भगिन्यौ-मातृभगिनी पितृभगिनी च तयोर्मृतौ पक्षिणी शुद्धिहेतुः ।

पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्।

इतिवृद्धमनुवचनात्। एतच्चान्यत्र मृतौ। स्वगृहमृतौ तु त्रिरात्रम्। तदाह प्रचेताः--

मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ।
मृते चार्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति॥ इति।

मातृष्वसेति पितृष्वसुरुपलक्षणं सम्बन्धसाम्यात्। यद्यप्यनयोर्वा- ष्वयोर्गृहविशेषो न श्रूयते तथाऽपि सन्निकर्षाधिक्येनाऽऽशौचाधिक्य- दर्शनात्त्रिरात्रपक्षः स्वगृहमरणविषयत्वेन व्यवस्थापनीयः इत्याचार्या- णामाशयः एवमग्रेऽपि ज्ञेयम्। तथा पितामहयोः=पितामहीपितामहयोः ये भगिन्यौ पितुः पितृष्वसा पितुर्मातृष्वसा चेति तयोरपि मरणे पक्षि- णी शुद्धिहेतुः। स्वगृहमृतौ तु त्र्यहम्। यद्यप्यत्राहत्योपपादकं वचनं नोपलभामहे तथाऽपि पितृबन्धूनां पितुः पितृष्वसृद्वारेण सम्बन्धित्वात् तदाशौचाभावे तत्पुत्राणामप्याशौचाऽनुपपत्तेरर्थसिद्धमेव तदाशौचमा- चार्यैः स्पष्टीकृतम्। अत एव बन्धुत्रयस्य "पितुः पितृष्वसुः पुत्राः" इत्यादिना तद्द्वारैव सम्बन्धित्वमाविष्कृतम्। (?)तथाऽप्यपितामह भगिन्योरपि पितामहद्वारेणैव सम्बन्धित्वात्तदाशौचमप्यर्थात्सिद्धमेवेति पृथक् प्रोक्तम्। तच्च पौत्राणां सपिण्डतयैव प्राप्तम्। अप्राप्तं तु पौत्री- णाम्, तदर्थं तु ब्रह्मपुराणीयं वाक्यं प्रवृत्तम्--

यथा मातामहाशौचं दौहित्रीणां विधीयते।
सम्बन्धसाम्यात्पौत्रीणां तत्पितामहयोरपि॥ इति।

अनेन च पौत्रीमरणेऽपि दौहित्रीमरणवदेवाऽऽशौचमुक्तं भवति। सम्बन्धसाम्यादितिहेतूपन्यासात्। अनेन "ये मातामहयोश्चैव" इति "मातुलाः स्वस्य पित्रोश्च" इत्यपि व्याख्यातम्। मातामही च मातामहश्च मातामहौ तयोर्ये भगिन्यौ=मातुः पितृष्वसा मातुर्मातृष्वसा च। तन्म- रणेऽपि पक्षिणी शुद्धिहेतुः। स्वगृहमरणे तु त्र्यहम्। याश्च तत्प्रजाः तासां=पित्रोः, पितामहयोः, मातामहयोश्च भगिनीनाम्। प्रजा=अप- त्यानि आत्मबन्धवः पितृबन्धवः मातृबन्धवश्चेति यावत्। यथोक्तम्--

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः॥ इति।

अत्र पुत्रपदमपत्योपलक्षणम्। पुत्राश्च पुत्र्यश्च पुत्राः इत्येकशेषात्। इदमेवाऽभिप्रेत्याचार्यैः प्रजापदं प्रयुक्तम्। एतेषु मृतेषु पक्षिणी शुद्धिहेतुः। तदाह मनुः—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च। (मनु० ५-८१ इति

यत्तु—

समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्।

मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥

इति जाबालेन मातृबन्धुशब्दोपलक्षितबन्धुत्रयेऽपि तथाशब्दपरामृष्टमेकरात्रमुक्तम्, यच्च विज्ञानेश्वरेण मातुलपदोपलक्षितबन्धुत्रयेऽप्येकरात्रमुक्तम्, तद्देशान्तरस्थविषयं, सापत्न्यादिविषयं पैतृष्वसेय्यादिविषयं च इति। (?)तृतीयपैतृष्वसेय्यादीनां तिसृणां तृतीयगोत्रसम्बन्धेन द्वितीयगोत्रसम्बन्ध्यपैतृष्वसेय्यादेर्विप्रकृष्टत्वात्। स्वगृहमृतौ तु त्र्यहम्। तदाह मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्।

विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्॥ (मनु० ५-१०१) इति।

मातुर्बान्धवान्। चकाराद्दाराप्तपितृबान्धवयोर्ग्रहणम्। आप्तान् मित्राणि। "असपिण्डं निर्हृत्य त्रिरात्रम्" इत्यनेनैव सर्वप्राप्तौ पुनर्मातृबान्धवग्रहणं स्वगृहमरणादिप्रत्यासत्त्यन्तरेऽपि त्रिरात्रप्रापणाय" इति मेधातिथिः। स्वस्र मातुलाः=मातुः सोदरा भ्रातरः। तन्मरणेऽपि पक्षिणी शुद्धिहेतुः।

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च।

आशौचं पक्षिणीं रात्रिर्मृता मातामही यदि॥

इति वृद्धमनुस्मरणात्। "मातुले पक्षिणीं रात्रिम्" (मनु० ५-८१) इति मनुस्मरणाच्च।

यत्तु—

गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च। (या०स्मृ०३-२४)

इति याज्ञवल्कीयमेकरात्रम्, यच्च "मातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण" इति वैष्णवं चैकरात्रम्, तद्विद्वदसहासापत्न्यासानुपनीतादिविषयम्। स्वगृहमरणे तु त्रिरात्रम्। तदाह प्रचेताः—

मातृष्वस्रामातुलयोः श्वश्रूश्वशुरयोर्गुरौ।

मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति॥ इति।

पितुश्च मातुला=मातुर्मातुलाः पितुर्मातुलाश्चेतियावत्। तन्मरणे पक्षिणी शुद्धिहेतुः।

श्वशुर्योर्भगिन्यां च मातुलान्यां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥

इति स्मरणात् । स्वगृहमरणे तु त्र्यहम् । अङ्गिरोवचनात् । पत्न्यश्चैषां=आत्ममातृपितृमातुलान्यः तासामपि स्वगृहमरणे त्र्यहमन्यत्र पक्षिणी । पूर्वोदाहृतवाक्यात् । मातृपितृमातुलान्योश्चाऽऽशौचे पूर्वोक्तन्याय एव मूलम् । एषां प्रजाश्च याः=आत्ममातृपितृमातुलानां प्रजा अपत्यानि=आत्ममातुलपुत्राः, पितृमातुलपुत्राः, मातृमातुलपुत्राश्चेति । तन्मरणेऽपि पक्षिणी ।

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च । (मनु० ५-८१)

इतिमाननात् । स्वगृहमरणे तु त्र्यहम् ।

विशुद्ध्यति त्रिरात्रेण मातुरात्मीयबान्धवान् । ( मनु० ५-१०१ )

इति मानवात् । उपपादित चैतदनन्तरम् । मातरश्च=आत्मपितृमातृमातुलानां मातरः आत्ममातामही, पितृमातामही, मातृमातामही चेति । तन्मरणेऽपि पक्षिणी शुद्धिहेतुः । स्वगृहमरणे तु त्र्यहम् ।

आचार्यवचने मूलमन्यत्राऽऽविष्कृतं मया ।
कथं कथं चित्तदिह विचार्यं बहुदर्शिभिः ॥ ५३ । ५४ ॥

किं च—

श्वश्रूश्वशुरजामातृदौहित्रविपदि स्मृतम् ।
स्वगृहे तु त्र्यहं तुल्यं पक्षिण्येव परत्र तु ॥ ५५ ॥

श्वश्रूश्वशुरेति । श्वश्रूश्वशुरजामातृदौहित्राणां स्वगृहमरणे त्रिरात्रं स्मृतं पूर्वैः । दौहित्रग्रहणं भागिनेयस्याप्युपलक्षणम् । तदाह प्रचेताः—

मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति ॥ इति ।

कूर्मपुराणेऽपि—

त्रिरात्रं श्वश्रूमरणे श्वशुरे चैतदेव हि । इति ।

यमोऽपि—

जामातरि मृते शुद्धिस्त्रिरात्रेणोभयोः स्मृता ।
पक्षिणी शालकानां स्यादिति शातातपोऽब्रवीत् ॥ इति ।

उभयोः श्वश्रूश्वशुरयोः । स्मृत्यन्तरेऽपि—

दौहित्रे भागिनेये च त्रिरात्रेण विशुद्ध्यति । इति ।

परत्र तु अन्यत्र तु मरणे पक्षिण्येव । तदाह वृद्धमनुः—

श्वशुरयोर्भगिन्यां च पक्षिणीं क्षपयेन्निशाम् । इति ।

जाबालोऽपि—

भागिनेये च दौहित्रे पत्यौ च दुहितुस्तथा।

बान्धवेषु च सर्वेषु पक्षिण्या शुद्धिरिष्यते॥ इति।

मनुस्तु—

संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते।

संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः॥ (१)

इति संस्कृताऽसंस्कृतदौहित्रभागिनेयविषयत्वेन त्रिरात्रपक्षिणीकल्पौ व्यवातिष्ठिपत्। यत्तु "श्वश्रूश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण" इति वैष्णवं तद्विदेशस्थविषयत्वेन, असवर्णश्वशुरविषयत्वेन वा व्याख्येयम्। यच्च—

मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते।

शालके तत्सुते चैव सद्यःस्नानेन शुध्यति॥

इति बृहन्मनुवचनं तद्देशान्तरमृतविषयत्वेन, अनौरसकन्यापतिविषयत्वेन, बालदौहित्रभागिनेयविषयत्वेन, अनौरसदौहित्रविषयत्वेन, व्यवहितभागिनेयविषयत्वेन वा व्याख्येयम्। इति न विरोधः॥५५॥

किं च—

मातामहे च तत्पत्न्यामाचार्ये च त्रिरात्रकम्॥

ऋत्विजि स्वसमीपस्थे एकाहं सन्निधौ त्र्यहम्॥ ५६॥

मातामह इति। मातामहे प्रेते त्रिरात्रम्। तदाह हारीतः—

मातामहे त्रिरात्रं स्यादेकाहं त्वसपिण्डतः। इति।

असपिण्डेऽसगोत्र इत्यर्थः। तत्पत्न्यां मातामह्यां प्रेतायां त्र्यहम्। तदुक्तं, कूर्मपुराणे—

मातामहीनां मरणे त्रिरात्रं स्यादशौचकम्।

एकोदकानां मरणे सूतके चैतदेव हि॥ इति।

मातामहानामितिपाठे त्वेकशेषेणार्थलाभः। यत्तु—

अशौचं पक्षिणी रात्रिर्मृता मातामही यदि।

इति बृहन्मनुवचनं तन्मातृसापत्नमातृविषयं, (सापत्न)मातृमातृविषयं वा। आचार्येऽनुपनीय कृत्स्नवेदाध्यापके प्रेते त्र्यहम्। तदाह विष्णुः—

(१) पद्यमिदं मनुस्मृतौ नास्ति। मिताक्षरायां तु "गुर्वन्ते" (या. ३-२४) श्लोकव्याख्यावसरे वृद्धवसिष्ठनाम्ना समुद्धृतं विज्ञानेश्वराचार्यैः।

"आचार्ये मातामहे च व्यतीते त्रिरात्रेण" इति । एतच्चान्यकर्तृकदाहादौ वेदितव्यम् ।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेतहारैः समं तत्र दशरात्रेण शुध्यति ॥ (मनु० ५-६५)

इति मनुना स्वकर्तृकदाहादौ विशेषाऽभिधानात् । गुरुराचार्यः । यच्च स्मृत्यर्थसारेण "मातामहाचार्यादीनां सर्वेषामविशेषेणैकग्रामे पक्षिणी" इत्युक्तं, तदपि त्र्यहाशौचप्रतिपादकवचनादर्शननिबन्धनमिति ध्येयम् । आचार्यपदं च तत्पुत्रपत्न्योरप्युपलक्षणम् । तदाह त्र्यहानुवृत्तौ गौतमः-"आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवम्" (गौ० १४-२७) इति । तत्पदं स्त्रियामप्यन्वेति । यत्तु—

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥ (मनु०५-८०)

इति मानवं तदनौरसाऽसवर्णपुत्रपत्नीविषयम् । एतेन "आचार्यपत्नीपुत्रोपाध्यायशिष्येष्वेकरात्रेण" इति वैष्णवं व्याख्यातम् । आचार्यपदं पत्नीपुत्रयोर्विशेषणम् । आचार्यपुत्रे त्वेकरात्रम् ।

आचार्यपुत्रीपुत्रेषु प्रेतेषु दिवसेन तु ।

इति शङ्खस्मरणात् । असमीपस्थे देशान्तरस्थे ऋत्विजि पुनर्मृते एकाहम् । याज्यर्त्विग्दौहित्रादीननुक्रम्य-"ग्रामान्तरे त्वेकाह." इति स्मृत्यर्थसारात् । सन्निधौ=एकग्रामे तु त्र्यहम् । "त्रिरात्रमृत्विजां च" (बौ०१-५-११५) इति बौधायनस्मरणात् । ऋत्विक्पदं याज्यमप्युपलक्षयति

मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति ।

इति प्रचेतःस्मरणात् । एतच्च यावज्जीवार्त्विज्यकरणविषयम् । सकृदार्त्विज्यकरणे तु—

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च । (मनु० ५-८१)

इति मानवं विज्ञेयम् ॥ ५६ ॥

किं च—

गुरुशिष्यसहाध्यायिमित्रश्रोत्रियनिर्गमे ।
दूरेऽहः पक्षिणी नो चेत्समीपे श्रोत्रिये त्र्यहम् ॥ ५७ ॥

गुरुरिति । गुरुरुपाध्यायस्तन्मृतौ दूरे देशभेदे अहोरात्रम् । तदाह कूर्मपुराणे—

एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि । इति ।

बौधायनोऽपि-"त्रिरात्रमेकरात्रमहोरात्रं कुर्वीत" (बौ०१-५-११३)

"आचार्योपाध्यायतत्पुत्रेषु" (बौ०१-५-११४) इति। नो चेदेकदेशे पक्षिणी।

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥

इति वृद्धमनुवचनात्। यत्तु—

मातृष्वसामातुलयोः श्वश्रूश्वशुरयोर्गुरौ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति॥

इति प्राचेतसं गुरौ त्रिरात्रं तद्गुरुपदस्याचार्यपरत्वात्तद्विषयम्। उपाध्यायपदं तत्पत्नीपुत्रोपलक्षणम्। "त्रिरात्रमेकरात्रमहोरात्रं कुर्वीत" (बौ०१-५-११३) "आचार्योपाध्यायतत्पुत्रेषु" (बौ०१-५-११४) इति बौधायनसस्मरणात्, "गुरौ गुर्वङ्गनासु च। आशौचं पक्षिणीं रात्रिं" इति वृद्धमनुवचनाच्च। शिष्यः=अन्योपनीतः स्वाध्यायिनः। तस्मिन् देशान्तरे मृतेऽहोरात्रम्। "शिष्येष्वतीतेष्वेकरात्रेण" इति वैष्णवस्मरणात्। एकदेशमृतौ तु पक्षिणी।

मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च। (मनु०५-८१)

इति मानवात्। यत्तु-"शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमेकरात्रमहोरात्रम् (बौ०-५-५-११६) इति बौधायनीयम्, यच्च श्वहानुवृत्तौ—"आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवम्" (गौ०१४-२७) इति गौतमीयम्, तत्स्वोपनीताध्यापितशिष्यविषयम्। सतीर्थ्यः=एकाचार्योपनीतः। यत्तु-

शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्।

इति वृद्धमनुवचनं तदेकदेशाऽध्यापितशिष्यविषयम्। सहाध्यायी=एकस्माद्गुरोः सह कृत्स्नवेदाध्यायी। तस्मिन् देशान्तरे मृतेऽहोरात्रम्। "सहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण" इति वैष्णवात्। एकदेशे मृते च पक्षिणी। "पक्षिणीमसपिण्डे योनिसम्बन्धे सहाध्यायिनि च" (गौ०१४-१९) इति गौतमीयात्। मित्रं स्नेहादुपकारातिशयकारि। तस्मिन् देशान्तरे मृतेऽहोरात्रम्।

समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्।
मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥

इति जाबालिस्मरणात्। एकदेशमृतौ तु पक्षिणी।

मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥

इति वृद्धमनुस्मरणात्। श्रोत्रियः एकशाखाध्यायी। तस्मिन्नेकग्रामवासिनि देशान्तरमृतेऽहोरात्रम्।

एकाहं स्यादुपाध्यायस्वग्रामश्रोत्रियेषु च।

इति कूर्मपुराणात्, "एकाहं सब्रह्मचारिणि समानग्रामीणे च श्रोत्रिये" इत्याश्वलायनस्मरणाच्च। एकग्राममृतौ तु पक्षिणी।

एकग्राममृते कार्या पक्षिणी श्रोत्रिये तथा॥

इति ब्रह्मपुराणात्। प्रतिवेशिनि श्रोत्रिये विशेषमाह–समीप इति। समीपे प्रतिवेशिनि श्रोत्रिये त्र्यहम्।

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्। (मनु०५–८१)

इतिमानवात्। उप=समीपम्। सम्पन्ने=स्थिते। यत्तु–

त्र्यहं मातामहाऽऽचार्यश्रोत्रियेष्वशुचिर्भवेत्।

इति बार्हस्पत्यं तदपि मानवेन समानविषयम्। यत्तु–

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।

शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्॥

इति वृद्धमानवं तत्कथञ्चिद्विप्रकृष्टश्रोत्रियविषयम्। अत्र 'चेत्' शब्देन राजाऽनूचानग्रामेश्वरकुलपतिप्रभृतीनामप्याऽऽशौचं सूचितम्। तदाह जाबालः–

समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्।

मातृबन्धौ गुरौ मित्रे मण्डलाऽधिपतौ तथा॥ इति।

मण्डलाऽधिपती राज्याऽनुवर्ती राजा। यत्तु–

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थित। (मनु०५–८२)

इति मानवं तदुच्छास्त्रवर्तिराजविषयम्। यच्च–

"निवासराजनि प्रेते तदहः शुद्धिकारणम्। (या०३–२५)

इत्यत्राऽह पदमहर्मात्रपरं मानवाऽनुरोधात्" इतिविज्ञानेश्वरव्याख्यानं तज्जाबालवचनेन,

निवासराजनि प्रेते जाते दौहित्रिके गृहे।

आचार्यपुत्रीपुत्रेषु प्रेतेषु दिवसेन तु॥

इतिशङ्खवचनेन च कथं न विरुध्यत इति चिन्त्यम्। न च तत्राप्यहःपदं अहर्मात्रपरमिति(१) शक्यं वक्तुम्। यथा गोत्रिमातृबन्धुगुरुमित्रेषु तथा मण्डलाधिपतावतिदेशात्। न च तच्चाहोरात्रमत्राहर्मात्रमित्येकेनाह.पदेनाऽभिधातुं शक्यते। शङ्खवचनेऽप्येष न्यायस्तुल्य इत्यलम्। तथा–

अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ। (मनु०५–८२)

इतिमानवं,

(१) 'मिति क्रेन हि शक्यं वक्तुम्' इति क० पु० पाठः।

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात् ॥

इति(१) वृद्धमानवेनाऽनुसन्धेयम् । ग्रामेश्वरो ग्रामाधिपः । कुलपतिः समूहपतिः । ग्राममाधि स्थिते शवे ग्रामस्याऽऽशौचम् ।

ग्राममध्यगतो यावच्छवस्तिष्ठति(२) कस्य चित् ।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात् ॥

इतिवृद्धमनुस्मरणात् ॥ ५७ ॥

सपिण्डादिजननमरणनिमित्तमाशौचमुक्त्वा इदानीं निमित्तान्तरेऽपि तदाह--

अन्नमाशौचिनामश्नंस्तद्गृहे निवसेद्यदि ।
असगोत्रोऽपि तद्गोत्रैः सममाशौचभाग्भवेत् ॥ ५८ ॥

अन्नमाशौचिनामिति । आशौचिनामन्नमश्नंस्तद्गृहे च वसतोऽसगोत्रस्यापि मृतसपिण्डैः सममाशौचं भवति । एतच्चासपिण्डं शवं निर्हृत्य तदन्नभोजनतद्गृहवासयोर्द्रष्टव्यम् ।

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
अशित्वा च सहोषित्वा दशरात्रेण शुद्ध्यति ॥

इतिकूर्मपुराणात् । एतेन

यद्यन्नमत्ति तेषां तु दशरात्रेण शुद्ध्यति । (मनु०५-१०२)

इति मनुवाक्यस्य "यद्यन्नमत्ति तेषां निर्हृत्याऽनिर्हृत्य वा उभयथाऽपि दशरात्रेण" इतिविवरणे नारायणसर्वज्ञस्य सार्वत्रिकमपहृतमेव । निर्हरणतदन्नाशनतद्गृहवासानां चकारेण समुच्चितत्वात् । तद्गोत्रैः समित्यनेन शवजातीयाऽऽशौचसमत्वमुक्तम् । तदाह गौतमः-"अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र शवोक्तमाशौचम्" (गौ० १४-२८) इति । उपस्पर्शनं निर्हरणम् । इदं च द्रव्यलोभाभावे । द्रव्यलोभेन तु विजातीयनिर्हरणे द्विगुणमाशौचम् । तदाह व्याघ्रः—

अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि ।
वहेच्छवं तदाऽऽशौचं दृष्टार्थे द्विगुणं भवेत् ॥ इति ।

दृष्टार्थे दृष्टप्रयोजनके । यत्तु विष्णुपुराणे—

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा ॥ इति ।

---

(१) 'मानवं वाऽनु' इति ख० पु० पाठः ।

(२) अयं पाठः पराशरमाधवीयः । एष एव च युक्त इति भाति । 'काहं चित्' इति तु शुद्धिचन्द्रिका क० ख० पु० पाठः ।

तदापद्विषयम् । द्रव्यलोभात्सवर्णशवनिर्हरणे तु जात्याशौचमेव । तदाह कूर्मः—

यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिप ॥
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति । इति ।

सपिण्डानां तु प्रेतनिर्हरणेऽपि नाशौचाऽऽधिक्यम् । तदाह देवलः—

विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम् ।
तेषां करोति यः कश्चित्तस्याऽऽशौचं न विद्यते ॥ इति ।

आदिशब्देन दाहादि । आधिक्यं 'आशौचस्य' इति शेषः । सोदकनिर्हरणे दशाहमाह स एव—

य समानोदकं प्रेतं वहेद्वाथ दहेत वा ।
तस्याशौचं दशाहं स्यादन्येषां तु त्र्यह विदुः ॥ इति ।

अन्येषां वाहकदाहकव्यतिरिक्तानां सोदकानाम् । अत्र सर्वत्र पूर्णाशौचं निर्हरणतदन्नाशनतद्गृहवासेषु समुदितेषु ज्ञेयम् । केवलनिर्हरणादौ त्वाशौचान्तराऽभिधानात् । तदाह मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ (मनु०५-१०१)
यद्यन्नमत्ति तेषां तु दशरात्रेण शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥ (मनु०५-१०२) इति।

स्नेहाऽतिशयेन निर्हरणं बन्धुवच्छब्दार्थः । अत्रान्ते "न चेत्तस्मिन् गृहेवसेत्" इतिवदता पूर्वं निर्हरणगृहवासयोस्त्रिरात्रं, निर्हरणतदन्नाशनतद्गृहवासेषु च दशरात्रमित्युक्तं भवति । निर्हरणमात्रे त्वेकाहः इति । यत्तु—

यः कश्चिन्निर्हरेत्प्रेतमसपिण्डः कथंचन ।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं तस्मिन्नेवाऽह्नि वै शुचिः ॥ (१)

इत्यङ्गिरोवचनं तदनाथब्राह्मणसंस्कारविषयम् । तदाह पराशरः—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥ इति ।

एतेन "असम्बन्धिनं प्रेतं द्विजं वाहयित्वा दाहयित्वा च सद्यःशौचं, सम्बन्धे त्रिरात्रम्" इति पैठीनसिवाक्यमपि व्याख्यातम् । यत्तु "परदा-

(१) (प्रेतस्य स्पर्शसंस्कारैर्ब्राह्मणो नैव दुष्यति ।
वोढा चाऽप्यग्निदाता च सद्यः स्नात्वाऽशुचिर्भवेत् ॥ इति ।) क०पु०नास्ति।

शौचस्पर्शनेऽनभिसन्धिपूर्वं सचैलोऽपः स्पृष्ट्वा सद्यः शुद्धो भवति" (बौ० ध०सू०१-५-११८) इति बौधायनीयं तदपि पूर्वेण समानार्थम्। अनभिसन्धिद्रव्यावनकाङ्क्षा। त्रिविधानामपि शवस्पर्शिनां धर्ममाह याज्ञवल्क्यः—

प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।

इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ (या०३-१४) इति ।

यदा पुनर्बुद्धिपूर्वं सकृदप्याशौचान्नमश्नाति तदा पूर्णाऽऽशौचम् । तदाह विष्णुः—"ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नीयात्तस्य तावदाऽऽशौचं यावत्तेषाम्" इति । एवकारोऽप्यर्थः। कूर्मपुराणेऽपि—

यस्तेषामन्नमश्नाति सकृदेवाऽपि कामतः ।

तदाशौचे निवृत्ते तु स्नानं कृत्वा विशुध्यति ॥ इति ।

आपद्यकामतो भोजने त्वङ्गिराः—

प्रेतान्नमसपिण्डस्य यावदश्नात्यकामतः ।

तावन्त्यहान्यशौचं स्यात्सपिण्डानां कथंचन ॥ इति ।

सपिण्डानामर्थान्मृतस्य प्रेतान्नमाशौचान्नं यावद्दिनमकामतो योऽश्नाति तस्याऽसपिण्डस्य अन्नदिवसात् तावन्त्यहान्यशौचं स्यादित्यर्थः। कूर्मपुराणेऽपि—

यावत्तदन्नमश्नाति दुर्भिक्षोपहतो नरः।

तावन्त्यहान्यशौचं स्यात्प्रायश्चित्तं ततश्चरेत् ॥ इति ।

आशौचिनामिति सामान्योपादानात्सूतके मृतके चान्नभोजने दोषः। तदाहाङ्गिराः—

अन्तर्दशाहे भुक्त्वान्नं सूतके मृतकेऽपि वा ।

असंस्पृश्यो भवेत्तावद्यावत्तद्व्रतमाचरेत ॥ इति ।

असंस्पृश्योऽशुचिः। तद्व्रतं तन्निमित्तं प्रायश्चित्तम् । तच्चाशौचान्ते। "अशौचव्यपगमे प्रायश्चित्तं कुर्यात्" इति विष्णुस्मरणात् । शङ्खोऽपि—

यस्तु भुङ्क्ते पराऽऽशौचे वर्णतोऽप्यशुचिर्भवेत् ।

अन्ते स शुद्धः शुद्धिश्च तस्याऽप्युक्ता मनीषिभिः ॥ इति ।

अन्ते आशौचस्य। शुद्धिः प्रायश्चित्तेन। यदीयत्वेन भोजनाद्यभावेपि संसर्गमात्रेणाऽऽशौचं भवतीति सूचितम्। तदाह बृहस्पतिः—

यस्तैः सहाऽऽसपिण्डोऽपि प्रकुर्याच्छयनासनम् ।

बान्धवो वा परो वाऽपि स दशाहेन शुध्यति ॥ इति ।

बान्धवः पितृबान्धवादिः । अङ्गिराः—

शय्यासनोपभोगं तु यः शावे भुञ्जीत नान्तरा।

सपिण्डः सह संशुद्ध्येदधःशायी तु संयतः ॥ इति ।

[ ] परोऽसपिण्डः । आद्यावाशौचस्य । शावं शवनिमित्तं धर्मम् । आशौचिभिः सह शयनासनादिकं करोति, आशौचमन्तरा न भुञ्जीत चेत्तदा सपिण्डः सह शुद्ध्येदित्यर्थः । अशौच्यन्नभोजनदोषस्य क्वचिद्-पवादमाहाङ्गिराः—

ब्रह्मक्षत्रविशां भुक्त्वा न दोषो ह्यग्निहोत्रिणाम् ।
सूतके शाव आशौचे ह्यहिथसञ्चयनात्परम् ॥
अन्नसत्रप्रवृत्तानामाममन्नं न गर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥ इति ।

तथा सपिण्डानामपि न दोषः—

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ।

इतियमस्मरणात् । अत एव भारते—

अन्नं ददतु पानीयं दीपं ददतु कामतः ।
ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ॥ इति ॥ ५८ ॥

असपिण्डनिर्हरणाऽऽशौचप्रसङ्गेन तद्दाहेऽपि तदाह—

असगोत्रमपि प्रेतं दाहयेद्यः कथंचन ।
स चाऽपि गोत्रिभिस्तुल्य आशौचे मुनिभिः स्मृतः ॥५९॥

असगोत्रमपीति । योऽसगोत्रमसपिण्डं प्रेतं कथचन केनाप्यभि-सन्धिना दाहयेद्दहेत्सोऽप्याशौचविषये गोत्रिभिःसपिण्डैः । तुल्य = समानः । पूर्वैः (मुनिभिः) स्मृतः । इदं च दाहानन्तरं तद्गृहभोजने द्रष्टव्यम् । तदुक्तं ब्रह्मपुराणे—

सजातिमसपिण्डं तु दग्ध्वा तद्गृहभोजिनः ।
स्वजात्युक्तमशौचं तु चरन्तीह(१) सुबुद्धयः ॥ इति ।

भोजनाऽभावे तु त्रिरात्रम् ।

सर्वे वर्णाः सजातीयान् दग्ध्वा त्र्यहमशौचिनः ।

इति ब्राह्मात् । इदमपि तद्गृहवासे । तदन्नभोजनतद्गृहवासाभावे त्वेकरात्रम् ।

अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ।
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुद्ध्यति ॥

इति दाहाऽधिकारे ब्रह्मपुराणात् । अन्यत्र प्रकान्तेभ्यः आचार्यादि-भ्यः अन्यान् दग्ध्वा यदि तदन्नभोजनं न कुर्यान्न च तैः सह संवसेदित्यर्थः। यद्वाऽन्यत्र(२) सपिण्डान् सूतकिनो विहाय यो भोजनं कुर्यात्तैः सह च

(१) 'चरन्ति हि' इति ख० पु० पाठः ।
(२) 'दग्धसपिण्डान्' इति ख० पु० पाठः ।

न संवसेत् इति सम्बन्धः। इदमपि स्नेहाद्यनुबन्धेन दाहे द्रष्टव्यम्। अनाथब्राह्मणस्य धर्मार्थं दाहकरणे त्वाह पराशरः—

असगोत्रमबन्धुं च प्रेतीभूतं द्विजोत्तमम्।
वहित्वा च दहित्वा च प्राणायामेन शुध्यति॥ (परा०३-४१) इति।

पैठीनसिरपि-"असम्बन्धिनं द्विजं वहित्वा च दहित्वा च सद्यः शौचम्" इति।

वृद्धपराशरोऽपि—

प्रेतस्पर्शनसंस्कारैर्ब्राह्मणो नैव दुष्यति।
वोढा चैवाऽग्निदाता च सद्यः स्नात्वा विशुध्यति॥ इति।

वहित्वेत्यादावि़डागमश्छान्दसः। संस्कारो दाहः। असगोत्रमित्यनेन समानोदकदहनेऽपि दशाहाऽऽशौचं सूचितं तदाह देवलः—

यः समानोदकं प्रेतं वहेद्वाऽथ दहेत वा।
तस्याऽऽशौचं दशाहं स्यादन्येषां तु त्र्यहं विदुः॥ इति।

अन्येषां दाहकव्यतिरिक्तानाम्। अपिशब्देनासवर्णदहनेऽपि तज्जातीयाऽऽशौचमित्युक्तम्। तदाह ब्रह्मपुराणम्—

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः।
आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा॥ इति।

कथंचनेत्यनेन लोभाद्यभिसन्धिना दहनेऽपि दशाहाद्यशौचमित्युक्तम्। तदाह ब्रह्मपुराणम्—

दाहयित्वा तु मूल्येन गुरुं प्रेतं भवेत्ततः।
आशौचं दशरात्रं तु शिष्यस्येति विनिश्चयः॥ इति।

मूल्येन प्रेतं दाहयित्वा गुरुं तु तदभावेऽपि दाहयित्वेत्यन्वयः।

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्।
प्रेतहारैः समं तत्र दशरात्रेण शुध्यति॥ (मनु०५-६५)

इतिमनुना गुरुशिष्यसम्बन्धपुरस्कारेणैव दहने दशरात्राभिधानात्। शिष्य इति दाहकमात्रोपलक्षणम्। सोऽपीत्यनेनैव प्रकृतसिद्धौ चकारोपादानमनुगमनचोदनाद्यशौचसमुच्चयार्थम्। तत्राऽनुगमनाऽऽशौचमाह याज्ञवल्क्यः—

ब्राह्मणेनाऽनुगन्तव्यो न शूद्रो न द्विजः कश्चित्।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः॥ (या०३-२६) इति।

इदं च समानोत्कृष्टजात्यनुगमनविषयम्। अपकृष्टजातिषु पृथगभिधानात्। अत एव मनुः—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव च।

स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति ॥ (मनु०५-१०३)
इति।

ज्ञातिं मातृसपिण्डं बन्धुं वा। सपिण्डाऽनुगमनस्य विहितत्वात्। अज्ञातिमसपिण्डं समानमुत्कृष्टं वा। एतच्च बुद्धिपूर्वाऽगमने। तदाह कूर्मः—

प्रेतीभूतं द्विजं विप्रो योऽनुगच्छेत्तु कामतः।
स्नात्वा सचैलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति। इति।

अत्र विशेषमाह शङ्खः—

अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम्।
सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति ॥ इति।

अत्र घृतप्राशनस्य शुद्ध्यर्थत्वान्न भोजननिवर्तकत्वम्। समानकार्यत्वाऽभावात्। *प्राणायामैस्त्रिभिः। कपिञ्जलन्यायात्।* अपकृष्टजात्यनुगमनाऽऽशौचमाह पराशरः—

क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥ (परा०३-४३)
शवं च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
*कृत्वाऽऽशौचं द्विरात्रं च प्राणायामान् षडाचरेत् ॥*(परा.३-४४)
प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ (परा० ३-४५)
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥(परा०३-४६)इति।

अत्रोपक्रमोपसंहाराभ्यां क्षत्रियाद्यनुगमनेऽपि सचैलस्नानाऽग्निस्पर्शघृतप्राशनादयो भवन्ति। एवमेव क्षत्रियस्य वैश्यशूद्राऽनुगमने एकरात्रत्रिरात्रे। वैश्यस्य शूद्राऽनुगमने चैकाह इत्यूहनीयम्। कूर्मोऽपि—

एकाहात् क्षत्रिये शुद्धिर्वैश्ये स्याद्विदिनेन तु।
*शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ॥* इति।

इदं च कामत एवाऽनुगमने ज्ञेयम्। अकामतोऽल्पाशौचदर्शनात्। तदाह ब्रह्मपुराणम्—

सर्वेषां स्यादहोरात्रं सर्वाऽनुगमनादपि।
शवस्पर्शविधानोक्तं विहितं सार्ववर्णिकम् ॥ इति।

शवस्पर्शविधानोक्तमेव सार्ववर्णिकमाशौचमत्राऽपि विहितमित्यर्थः। एवं च यत्पराशरवचने अज्ञानपदं तच्छास्त्रार्थाऽपरिज्ञानपरमिति सिद्धम्। यत्तु विज्ञानेश्वराचार्यैः 'ब्राह्मणस्य वैश्याऽनुगमने पक्षिणी क्षत्रियस्य शूद्राऽनुगमने च पक्षिणी इत्यूहनीयम्' इत्युक्तं *तत्पराशरक्-*

मेपुराणादिवचोविरोधाच्चिन्तनीयम् । एवं निषेधे जाग्रति कथं शूद्रा अनुगन्तव्या इत्यत आह पराशरः—

विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः ।
द्विजैस्तदाऽनुगन्तव्या एष धर्मः सनातनः ॥ इति । (परा०३-४८)

उदकमुदकक्रिया सा अन्ते यस्य कर्मणो दाहादेस्तदुदकान्तम् । निर्वर्त्य यदा शाद्वलाद्युपस्थिता भवेयुस्तदा द्विजैरनुगन्तव्या इत्यर्थः । शूद्रस्य तु द्विजात्यनुगमने सज्योतिराशौचम् । तदाह पारस्करः—

स्पर्शं विनाऽनुगमने शूद्रो नक्तेन शुद्ध्यति ॥ इति ।

"रात्रौ चेत्सूर्योदयेन" इति । तथा मृतासपिण्डोद्देशेन रोदनेऽप्याशौचम् । तत्र ब्राह्मणोद्देशेनाह पारस्करः—

अस्थिसञ्चयनादर्वाग्रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य ऊर्ध्वमाचमनं स्मृतम् ॥ इति ।

दशाहान्तरस्थिसञ्चयनादर्वाक् स्नानम् । ऊर्ध्वं तस्मादाचमनमिति । ब्रह्मपुराणेऽपि—

मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु ।
तावद्योऽबान्धवस्तत्र रौति तद्बान्धवैः सह ॥
तस्य स्नानाद्भवेच्छुद्धिस्ततस्त्वाचमनं स्मृतम् ॥ इति ।

आहृतान्यसञ्चितानि । अबान्धवोऽसपिण्डः । स्नानात्सचैलात् । तदाह कूर्मः—

अनस्थिसञ्चिते विप्रे ब्राह्मणो रौति चेत्तदा ।
स्नानेनैव भवेच्छुद्धिः सचैलेन न संशयः ॥ इति ।

यत्तु—

सजातेर्दिवसेनैव ब्रह्मक्षत्रियवैश्ययोः

इतिपारस्करवचनं तद्गृहे गत्वेत्युपक्रमाद् गृहगमनपूर्वकरोदने द्रष्टव्यम् । ब्राह्मणस्य क्षत्रियवैश्ययोद्देशेन रोदनेऽहोरात्रम् । तदाह ब्रह्मपुराणम्—

अनस्थिसञ्चयाद्विप्रो रौति चेत्क्षत्रवैश्ययोः ।
तदा स्नातः सचैलस्तु द्वितीयेऽहनि शुद्ध्यति ॥ इति ।

द्वितीयेऽहनि प्राप्ते इत्यर्थः । यत्तु द्वितीयेऽहनीत्यस्य द्यहेनेति हारलताविवरणं तत्—

अस्थिसञ्चयनादर्वागेकाहं क्षत्रवैश्ययोः ।

इति स्वोदाहृतकूर्मवचनाऽप्रतिसन्धाननिबन्धनमित्युपेक्षणीयम् । इदं च तद्गृहगमनाऽभावे । तद्गृहं गत्वा रोदने तु "ब्रह्मक्षत्रियवै-

श्रयो" इति पारस्करोक्त द्रष्टव्यम्। तद्गृहं गत्वेत्युपक्रमात्। अस्थिसञ्चयनोत्तरकाल तु सज्योति ।

अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु।

इति कूर्मवचनोत्तराधात्। ब्राह्मण इति ब्राह्मणोद्देशेन क्षत्रियादीनां रोदने स्नानमात्रमित्यर्थः। ब्रह्मपुराणे तु—

कृते तु सञ्चये विप्र. स्नानेनैव शुचिर्भवेत्।

इतिस्नानमेवाक्त तत्तद्बान्धवसाहित्यव्यतिरेकेणाश्रुपातमात्रविषयम्। ब्राह्मणस्य शूद्रोद्देशेन त्रिरात्रम्। तथा च ब्रह्मपुराणम्—

अनस्थिसञ्चिते शूद्रे ब्राह्मणो रौति चेज्जडः।

तदा सचैल स्नातस्तु शुध्यते दिवसैस्त्रिभिः॥

अस्थिसञ्चयनादूर्ध्वमहोरात्रेण शुध्यति॥ इति।

कौर्मेऽपि—

अनस्थिसञ्चिते शूद्रे रौतिचेद्ब्राह्मणः स्वकैः।

त्रिरात्र स्यात्तथाऽऽशौचमेकाहं त्वन्यथा स्मृतम्॥ इति।

इदं तु तद्गृहं गत्वा रोदने द्रष्टव्यम्। तदाह पारस्करः—

अस्थिसञ्चयनादर्वाग्यदि विप्रोऽश्रु पातयेत्।

मृते शूद्रे गृहं गत्वा त्रिरात्रेणैव शुध्यति॥ इति।

(१)कौर्मेऽपि—

अस्थिसञ्चयनादूर्ध्वं मासं यावद्द्विजातयः।

अहोरात्रेण शुध्यन्ति वाससा क्षालनेन च॥ इति।

प्रसङ्गात् स्थानान्तरमेलने(२) सर्वोद्देशेन सर्वेषामपि रोदने स्नानमेव तदाह विष्णुः—"सर्वस्यैव प्रेतस्य बान्धवैः सहाश्रुपातन कृत्वा स्नानेन, अकृतेऽस्थिसञ्चयने तु सचैलस्नानेन" इति। रोदन विना विलापदानमात्र(३) शूद्रोद्देशेन कृत्वाऽहोरात्रेण ब्राह्मणः शुध्यति। तदाह पारस्करः—

मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम्।

वर्जयेत्तदहोरात्रं दान स्वाध्यायकर्म च॥ इति।

क्षत्रियादीनां क्षत्रियोद्देशेन वैश्यादीनां च वैश्योद्देशेन रोदने सचैलं स्नानमेव। तदाह ब्रह्मपुराणम्—

सचैल स्नानमन्येषामकृते त्वस्थिसञ्चये।

कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम्॥ इति।

---

(१) 'कौर्मेऽपि' इति ख० पु० नास्ति।

(२) 'मेलने तु' इति ख० पु० पाठः।

(३) 'विलापमात्र' इति ख० पु० पाठः।

अन्यथा ब्राह्मणातिरिक्तानां क्षत्रविट्शूद्रोद्देशेनाकृतेऽस्थिसञ्चये रोदने सचेलं, अन्यथा केवलं स्नानमित्यर्थः। क्षत्रियवैश्ययोर्वैश्यशूद्रोद्देशेनैकान्तरादुद्देशेन च रोदन यद्यपि विशेषो न श्रूयते तथाऽपि ब्राह्मणस्याऽनन्तरैकान्तरवर्णोद्देशेन यदाऽशौच तदेतद्वाऽपि ज्ञेयम्। न्यायसामान्यादिति। शूद्रस्य तु द्विजातिमात्रोद्देशेन रोदने सज्योतिराशौचम्। तदाह पारस्करः—

स्पर्श यत्नाऽनुगमने शूद्रो नक्तेन शुद्ध्यति॥ इति।

अनुगमनं रोदनस्याऽप्युपलक्षणम्। रात्री चेत्सूर्योदयेनेति॥५९॥

दाहनिमित्ताऽऽशौचनिर्णयप्रसङ्गेन दाहे कालविशेषेणाऽऽशौचे विशेषमाह—

अन्तर्दशाहदाहे तु शेषतः शुचयोऽखिलाः॥
बहिर्दशाहदाहे तु दाहादित्रिदिनं स्मृतम्॥ ६०॥

अन्तर्दशाहेति। प्रोषितस्य सन्निहितस्य वा यस्मिन् दिने प्राणवियोगः तस्मिन्दिने दैवान्मानुषाद्वाऽपराधादनिष्पन्नो दाहो यदि दशाहमध्य एव द्वितीयतृतीयादिदिनेषु देहाऽस्थिपर्णशराणामन्यतमस्य क्रियते तदा मरणदिनमारभ्य यावन्त्यवशिष्टानि दिनानि तैरेव सर्वेऽपि सपिण्डाः शुचयो भवन्ति। तद्दाहदिनमारभ्य दशाहाऽऽशौचं कुर्युरित्यर्थः। इदं चाऽनाहिताग्निमरणविषयम्। आहिताग्नेस्तु दाहदिनमारभ्यैवाऽऽशौचस्य विधानात्। तथाहाङ्गिराः—

अनग्निमत उत्क्रान्तेः साग्नेः संस्कारकर्मणः।
शुद्धिः सञ्चयनं दाहान्मृताहस्तु यथाविधि॥ इति।

शङ्खोऽपि—

मरणादेव कर्तव्यं संयोगो यस्य नाग्निना।
दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः॥ इति।

दशाहादूर्ध्वं तु देहाऽस्थिपर्णशराऽन्यतमदाहे दिनत्रयमाशौचं सर्वेषां स्मृतं पूर्वैः। तदुक्तं ब्रह्मपुराणे—

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः।
तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि॥
शुचिदेशेजलसम्मिश्रैर्दग्धव्यश्च तथाऽग्निना।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा तु बान्धवैः॥
एवं पर्णदाहं दग्ध्वा त्रिरात्रमशुचिर्भवेत्॥ इति।

पुत्रव्यतिरिक्तस्य दाहकर्तुस्त्रिरात्रमेव। तदुक्तं विद्वादर्शे-"प्रतिष्ठ-

तर्हि श्रवणकाल एवाऽऽशौचग्राहिणां कथमित्यत आह—

प्राग्ग्राहिणां तु नैवं स्यात्कर्तुस्त्वस्ति तथाऽपि च ।
कर्ता चेत्तनयः पूर्वाग्रहे पूर्णमुदीरितम् ॥ ६२ ॥

प्राग्ग्राहिणामिति । प्राक् मरणश्रवण एव गृहीताऽऽशौचानां सपिण्डानां पुनर्दाहकाले एवं त्रिरात्राऽऽशौचं न स्यात् । किं तु पूर्वाऽऽशौचग्रहणेनैव शुद्धिः । तर्हि दाहकर्तुः कथमित्यत आह—कर्तुरिति । कर्तुर्दाहकस्य तथाऽपि पूर्वं मरणश्रवणकाले गृहीताऽऽशौचस्याऽपि पुनर्दाहकाले त्रिरात्राऽऽशौचमस्ति । तु शब्दो विशेषाऽभिधानार्थः । किमेतत्पुत्रसाधारणं नेत्याह—कर्ता चेदिति । [ तनयः ] पुत्रश्चेत् कर्ता पूर्वमगृहीताऽऽशौचः पितृदाहं करोति तदा पूर्णमेवाऽऽशौचमुदीरितं पूर्वैः । 'पूर्वाग्रहे' इत्यनेन गृहीताऽऽशौचस्य पुत्रस्याऽपि दाहकाले त्रिरात्राऽऽशौचमेवेति ध्वनितम् ॥ ६२ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामकविनायकपण्डितकृतायां षडशीतिविवृतौ शुद्धिचन्द्रिकायामसगोत्राऽऽशौचप्रकरणम् ।

पूर्वं सवर्णसपिण्डाऽऽशौचमभिहितमिदानीमसवर्णसपिण्डाऽऽशौचमाह—

उत्तमाऽधमसापिण्ड्ये जनने मरणेऽपि च ।
उत्तमाऽऽशौचमानं यत्तदेव स्याद्द्वयोरपि ॥ ६३ ॥

उत्तमेति । उत्तमो ब्राह्मणादिः । पूर्वपूर्वो वर्ण उत्तरोत्तरवर्णाऽपेक्षया । अधमः क्षत्रियादिः । उत्तरोत्तरवर्णः पूर्वपूर्ववर्णाऽपेक्षया तौ उत्तमाऽधमौ तयोः सापिण्ड्यं एकशरीरावयवान्वयरूपम् । तच्च त्रिपुरुषमेव । तदाह दक्षः—

एकजाता बहवः पृथक्क्षेत्राः पृथग्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥ इति ।

अस्यार्थः—एकस्माद् ब्राह्मणादेर्जाताः पृथक्क्षेत्रा भिन्नजातीयमातृजन्याः त एव पृथग्जनाः भिन्नजातीयाः ते एकपिण्डाः सपिण्डाः पृथक्शौचाः भिन्नशौचाः तेषां पिण्डस्त्रिष्वावर्तते त्रिपुरुषमेव सापिण्ड्यमिति । अन्ये तु 'पृथग्वनाः' इति पठन्ति । तत्राऽपि भिन्नजातीयमा-

गादन्यथा विभागभाज इत्यर्थः। तदुक्तं ब्रह्मपुराणे—

क्षत्रविट्शूद्रजातीनां सापिण्ड्यं तु त्रिपूरुषम्।
ब्राह्मणैरपि जातानामविभक्तार्थभागिनाम्॥ इति।

ब्राह्मणैरिति क्षत्रियाद्युपलक्षणम्। अविभक्तार्थभागिनामित्यविभक्तानां पितृजातीयाऽऽशौचप्राप्त्यर्थम्। [अतएव] वृद्धपराशरोऽपि—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु॥ इति।

अस्मिन् सापिण्ड्ये विद्यमाने जनने मरणे च जाते यदुत्तमस्य ब्राह्मणादेराशौचमानं दिनपरिमाणं तदेव द्वयोरुत्तमाधमयोरप्याशौचे परिमाणं स्यात्। यद्यपि शूद्रापेक्षयोत्तमाः ब्राह्मणक्षत्रियविशः, ब्राह्मणापेक्षया चाधमाः क्षत्रविट्शूद्राः इत्येवमुत्तमाऽधमानामनेकत्वाद्द्वयोरिति नोपपद्यते तथाऽप्युत्तमत्वाऽधमत्वोपाधिद्वयवशीकरणाद् द्वयोरिति व्यपदेशः। तथा चायमर्थः—ब्राह्मणस्य क्षत्रविट्शूद्रेषु बन्धुषु जातेषु मृतेषु वा दशाहमाशौचम्। तथा क्षत्रियस्य विट्शूद्रेषु बन्धुषु जातेषु मृतेषु वा द्वादशाहम्। वैश्यस्य शूद्रे बन्धो जाते मृते वा पञ्चदशाहम्, तथा वैश्यस्य ब्राह्मणक्षत्रिययोर्बन्ध्वोर्जातयोर्मृतयोर्वा द्वादशाहानि। क्षत्रियस्य ब्राह्मणे बन्धा जाते मृते वा दशाहमिति। स्वस्वसमानजातीयेषु बन्धुषु जातेषु मृतेषु वा स्वस्वजातीयमाशौचमिति स्थितमेव। तदाहतुः कूर्मबौधायनौ—

क्षत्रविट्शूद्रजातीया ये स्युर्विप्रस्य बान्धवाः।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते॥

तेषां जननादिनिमित्ताऽऽशौचे इति। ब्रह्मपुराणेऽपि—

बान्धवेषु च विप्रस्य क्षत्रविट्शूद्रजातिषु।
मृतेषु वाऽथ जातेषु दशाहाच्छुद्धिरिष्यते॥
क्षत्रियस्याऽथ वैश्यस्तु वैश्यस्य वृषलस्तथा।
जायते म्रियते बन्धुस्तत्राऽऽशौचं स्वकं भवेत्॥ इति।

अत्रैव विषये कूर्मः—

राजन्यवैश्या अप्येवं हीनवर्णासु योनिषु।
स्वमेव शौचं कुर्यातां विशुद्ध्यर्थं न संशयः॥ इति।

तथोत्तमाशौचमेवाधमेन कार्यम्। तदाऽऽह ब्रह्मपुराणम्—

शूद्रा वैश्याः क्षत्रियास्तु क्रमादुत्तरजातिषु।
बान्धवेषु चरन्त्यत्र यत्संख्यं तेषु विद्यते॥ इति।

मनुकूर्मावपि—

सर्वे तूत्तमवर्णानां शौचं कुर्युरतन्द्रिताः ।
तद्वर्णविधिदृष्टेन स्वमशौचं स्वयोनिषु ॥
शूद्रविट्क्षत्रियाणां तु ब्राह्मणे संस्थिते सति ।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः ॥ इति ।

विष्णुरपि—"हीनवर्णानामधिकवर्णेषु तेदाऽऽशौचव्यपगमे शुद्धिः"
अत्र विरुद्धानि (१)वचनानि दृश्यन्ते । तथाह दक्षः—

वर्णानामानुपूर्व्येण स्त्रीणामेको यदा पतिः ।
दशाहषड्त्र्यहैकाहाः प्रसवे सूतकं भवेत् ॥ (द० ६-१७)

हारीतोऽपि—

शुध्येद्विप्रो दशाहेन जन्महानौ स्वयोनिषु ।
षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ॥ इति ।

विष्णुरपि-"ब्राह्मणस्य क्षत्रविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः क्षत्रियस्य विट्शूद्रेषु षड्रात्रत्रिरात्राभ्यां वैश्यस्य शूद्रे त्रिरात्रेण" इति ।
शङ्खोऽपि—

एकरात्रं त्रिरात्रं च षड्रात्रं मासमेव च ।
शूद्रे सपिण्डे वर्णानामाशौचं क्रमशः स्मृतम् ॥ (शं०१५-१७)
त्रिरात्रमथ षड्रात्रं पक्ष एकस्तथैव च ।
वैश्ये सपिण्डे वर्णानामाशौचं क्रमशः स्मृतम् ॥ (शं०१५-१८)
सपिण्डे क्षत्रिये शुद्धिः षड्रात्राद्ब्राह्मणस्य तु ।
वर्णानां परिशेषेण द्वादशाहेन निर्दिशेत् ॥ (शं०१५-१९) इति

क्षत्रियमरणे परिशेषाणां वर्णानां क्षत्रियवैश्यशूद्राणामित्यर्थः ।
कूर्मपुराणेऽपि—

षड्रात्रं वा त्रिरात्रं स्यादेकरात्रं क्रमेण तु ।
वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमुच्यते ॥
अर्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः ।
शूद्रक्षत्रियविप्राणां वैश्येष्वाशौचमुच्यते ॥
षड्रात्रं द्वादशाहं च विप्राणां वैश्यशूद्रयोः ।
आशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः ॥ इति ।

अत्रायं समुदायार्थः—ब्राह्मणस्य ब्रह्मक्षत्रियवैश्यशूद्रेषु बन्धुषु जातेषु मृतेषु वा दशषड्त्र्येकदिनान्याशौचम् । तथा क्षत्रियस्य क्षत्रविट्शूद्रेषु बन्धुषु जातेषु मृतेषु वा द्वादशषड्त्रिदिनानि । वैश्यस्य वैश्य

(१) 'अत्र च विरुद्धानि वचनानि' इति ख० पु० पाठः

शूद्रेषु बन्धुषु [जातेषु] मृतेषु वा पक्षषड्रात्रे । शूद्रस्य शूद्रे बन्धौ जाते मृते वा मासमिति । ब्राह्मणादिजननमरणयो' पुनः क्षत्रियादीनां ब्राह्मणादिजातीयमेवाशौचमिति । अस्याऽपि विरुद्धार्थमाह (१)बृहस्पतिः—

शुद्ध्येद्विप्रो दशाहेन जन्महानौ स्वयोनिषु ।
सप्तपञ्चत्रिरात्रैस्तु क्षत्रविट्शूद्रयोनिषु ॥ इति ।

तमेवं विरोधं परिजहार हारलता यथा—'दक्षवचनं यथाक्रमविवाहोढाऽस्यपत्याशौचविषयम् । 'वर्णानामानुपूर्व्येण' इत्यानुपूर्व्यवचनात् । न च वर्णपदेनानुपूर्व्यपदमन्वेति । अर्थातिरेकाभावात् । न च दशाहादिपदैरन्वेति । यथासंख्यन्यायेनैव तदर्थलाभात्, व्यवहितान्वयाच्च । तस्मादानुपूर्व्येण यथाक्रमविवाहेनैव यदा एकपतिरित्यर्थलाभो भवति । बार्हस्पत्यं तु व्युत्क्रमविवाहोढस्यपत्याशौचविषयमर्थाद्भवति । व्युत्क्रमविवाहस्य निषिद्धत्वेन प्रायश्चित्तनिमित्तत्ववदधिकाऽऽशौचनिमित्तत्वस्याऽपि युक्तत्वादिति । तन्मन्दम् । दक्षवाक्यस्य वर्णानां क्रमेणैकराशाद्याशौचप्रतिपादकैः "आशौचं क्रमशः स्मृतम्" इत्यादिशङ्खकूर्मादिवाक्यैः समानार्थत्वेनाऽप्रस्तुताऽऽनुपूर्व्यविवाहविषयत्वाभावात् । किं च यथा "प्रसवे सूतकं भवेत्" इत्यस्य व्यवहितस्याऽपि सम्बन्धपेक्षायां वर्णानामित्युपतिष्ठते, तथा प्रकाराकाङ्क्षायामानुपूर्व्येणेत्येतदपि सम्बध्यते इति न दोषः । तस्माद्देशाचारतो व्यवस्थैवां पक्षाणां वाच्या । आह च ब्रह्मपुराणम्—

देशधर्मप्रमाणत्वात् षड्रात्रं क्षत्रियेष्वथ ।
त्रिरात्रमपि वैश्यस्य शूद्रेष्वेकाहमेव च ॥ इति ।

उपलक्षणमेतत्सप्तरात्रादीनामप्येवैव दिगिति । आपदनापत्कल्पत्वेन गुणवद्गुणवद्विषयत्वेन स्निग्धाऽस्निग्धविषयत्वेन वा व्यवस्थेति सर्वं सुस्थम् । एतेषामनुलोमजादीनां मूर्द्धावसिक्तादीनां स्वस्वजातीयभ्रातृजननमरणयोराशौचं प्रागेवाऽभिहितम् । विजातीयपत्नीनां जीवति भर्तरि तज्जातीयं मृते स्वस्वजातीयमेव । तदाह विष्णुः—"पत्नीनां दासानां चाऽनुलोम्येन स्वामितुल्यमाशौचं मृते स्वामिन्यात्मीयम्" इति ॥६३॥

"त्रिरात्रमुपनीतेः प्राक्" (प३० ) इत्यत्र शूद्राणामुपनयनाभावात्तस्यानापन्नाद्विवाहात्प्राक् त्रिरात्रमित्युक्तं तस्याऽपवादमाह—

अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ॥
मृत्युं समधिगच्छेच्चेन्मासाच्छुद्ध्यन्ति बान्धवाः ॥ ६४ ॥

---

(१) 'विशुद्धार्थमाह' इति ख०.पु० पाठ ।

अनूढभार्येति । तुशब्दः प्रकरणविच्छेदार्थः, अर्थान्तरप्रस्तावनार्थो वा । अनूढभार्योऽकृतविवाहः शूद्रः षोडशाब्दपादनन्तरं चेन्म्रियते तस्य बान्धवाः सपिण्डाः मासाच्छुध्यन्ति कर्मार्हा भवन्ति । तदाह शङ्खः-

अनूढभार्यः शूद्रस्तु षोडशाब्दात्परात्परम् ।
मृत्युं समधिगच्छेच्चेन्मास तस्याऽपि बान्धवाः ॥
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा (शं०१५-६-७)

ननु अनूढभार्यस्य शूद्रस्य षोडशवर्षादनन्तरं मासाऽऽशौचमभिदधताऽनेन वाक्येन [ यत् ] आषोडशाब्दात्त्रिरात्राऽऽशौचमुक्तं भवति तदनुपपन्नम् । अनेकवचनविरोधात् । तदाहाङ्गिराः—

शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पञ्चभिः ।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ॥
षड्वर्षान्तमतीतो यः शूद्रस्तन् म्रियते यदि ।
मासिकं तु भवच्छौचमित्यङ्गिरसभाषितम् ॥ इति ।

न्यूनत्रिवर्षस्य पञ्चाहं त्रिवर्षादनन्तरं षड्वर्षपर्यन्तं द्वादशाहं षड्वर्षादनन्तरं मासमिति [ यावत् ] । हारीतोऽपि—

आमौञ्जीबन्धनाद्विप्र· क्षत्रियश्चाऽऽधनुर्ग्रहात् ।
आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥ इति ।

अत्राप्याङोऽनुप्रसङ्गः । तेन शूद्रोऽप्यावस्त्रग्रहादित्यर्थः । तन्मरणे त्रिरात्राऽऽशौचमनुवर्तते । तथा च वस्त्रद्वयग्रहणानन्तरं शूद्रमरणे[ऽप्यहम्] आशौचमिति । [ तथा च ] ब्रह्मपुराणमपि--

विप्रे ह्यनुपनीतस्तु राजा चैवाऽधनुर्ग्रहात् ।
अगृहीतप्रतोदस्तु वैश्यः, शूद्रस्त्ववस्त्रयुक् ॥
म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव हि ।
द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः ॥
पञ्चाब्दिकस्तु शूद्राणां स्वजात्युक्तमतः परम् । इति ।

अत्र केचित्—परस्परविरोधादेषामुपेक्षैवेति । तन्न । प्रामाणिकानेकनिबन्धोदाहृतानामुपेक्षाया अन्याय्यत्वात् । यत्तु पञ्चषड्वर्षवस्त्रद्वयग्रहस्यानन्तरं मासाऽऽशौचं सगुणशूद्रविषयं षोडशवर्षादनन्तरं मासाऽऽशौचं निर्गुणविषयमिति । तदसत् । कर्मादयोऽपि शूद्रस्य गुणा तेषां च पञ्चवार्षिकादावसम्भवात् । न चैषां वचनानां कृतविवाहशूद्रविषयत्वमिति वाच्यम् । पञ्चवार्षिकादेर्यौवनाऽभावेन विवाहयोग्यताऽभावात् "युवाऽधीमान्" इत्यनेन च तस्यैव तद्विधानात् । न चैतत्रैवर्णिकविषयम् । पुरस्त्वपरीक्षादिद्वैर्थ्यत्वेन सर्ववर्णसाधारण्यात् । त-

स्मादविरुद्धमेतदिति। अत्रोच्यते। "शूद्रस्त्वब्रह्मयुक्" "शूद्रो पक्षत्रय-महात्" इतिब्राह्महारीतवाक्ययोर्विषयविशेषाऽश्रवणाद्यथाकालकृतविवाहविषयत्वेन व्यवस्थेति न विरोध.। एवमपि ब्राह्माङ्गिरसवाक्ययोः पञ्चषड्वार्षिकताश्रवणात्तादृशयोश्च विवाहयोग्यताऽभावात् कृतविवाहविषयत्वं न सम्भवतीति विरोधः प्रतिभाति, तत्राऽप्येवं परिहारः—

त्रैवर्णिकानां संस्कारबाहुल्याद् गृहिणीविधिः।
यथोक्तेनैव कालेन शूद्राणां स निजेच्छया॥

इतिवृद्धवसिष्ठवाक्येनाभिहितः। अस्य चायमर्थः-त्रैवर्णिकानां विवाहप्राक्कालीनानामुपनयनवेदाध्ययनवेदव्रतस्नानादीनां नियतकालानां संस्काराणां बाहुल्यात्प्रतिपदोक्त एककाले विवाह। शूद्राणां तु विवाहात्प्राक् चौलाऽनन्तरं नियतकालसंस्कारान्तराऽभावाद्यथोपपत्ति-विवाहः इति। तेन पञ्चमषष्ठयोरपि वर्षयोर्विवाहसम्भवात् शूद्रस्य-मासाऽऽशौचाऽभिधानं न विरुद्धमिति। अत एव स्मृत्यर्थसारे-"स्त्रीणां शूद्राणां च विवाहादूर्ध्वं जात्याशौचम्" इत्यभिहितम्॥ ६४॥

शूद्राऽऽशौचप्रसङ्गेन स्मृत दासाद्याशौचमाह—

स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु कर्मसु॥
योग्याः स्युर्मासतो दासी सुता चेत्स्पृश्यतामियात्॥ ६५॥

स्वामिशौचेनेति। दासा आद्या येषां ते दासाद्या। दासाश्च पञ्चदशप्रकाराः। तदुक्तम्—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः॥
मोक्षितो महतश्चर्णाद्युद्धप्राप्त पणे जितः।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥ इति।

यत्तु मनुना—

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ।
पैत्रिको दण्डदासश्च सप्तैते दासयोनयः॥ (मनु०८-४१५)

इति सप्तविधत्वमुक्त तत्तेषामपि दासत्वप्रतिपादनाय, न त्वन्यपरिसङ्ख्यार्थम्। यद्यपि पणजितत्वादिकं सर्ववर्णेषु सम्भवति, तथाऽप्युत्तरोत्तर एव वर्णाः पूर्वपूर्ववर्णस्य दासाः। न पूर्वपूर्वो उत्तरोत्तरस्य।

वर्णानामानुलोम्येन न दास्यं प्रातिलोम्यतः।

इत्याङ्गिरसस्मरणात्। आद्यशब्देन शिष्यान्तेवासिभृतका गृह्यन्ते।

दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः।
स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके॥

इतिबृहस्पतिस्मरणात्। अन्तेवासी=शिल्पशिक्षार्थी। मूल्येन कर्मकरो भृतकः। शिष्यो वेदविद्यार्थी। एते दासाद्याः स्वजननमरणयोः स्वाम्याशौचकालेन स्पृश्या भवन्ति। यो यज्जातीयस्य समस्योत्कृष्टस्य वा दास्यं करोति, स तज्जातीयाऽऽशौचकालेनैव स्पृश्यो भवतीत्यर्थः। तदाहाङ्गिराः—

दासी दासश्च सर्वो वै यस्य वर्णस्य यो भवेत्।
तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकम्॥ इति।

हारीतोऽपि—

मृतसूतेषु दासानां पत्नीनां चाऽनुलोमतः।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौतकम्॥ इति।

यौतकं पृथक्भूतं स्वजात्युक्तम्। तदाह विष्णुः—"पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचं मृते स्वामिन्यात्मीयम्" इति। एतश्च स्वामिगृहावस्थितानां ज्ञेयम्। "एकत्र वासिनः" इति बार्हस्पत्यात्। 'स्पृश्या' इत्यनेन कर्मकरणयोग्यत्वमुक्तम्। तदाह शातातपः—

मूल्यकर्मकराः शूद्रा दासी दासस्तथैव च।
स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः॥ इति।

मूल्यकर्मकराः शूद्राः=भृतका इत्यर्थः। एतेन स्वामितुल्यमाशौचमित्यादावाशौचशब्दोऽस्पृश्यत्वपरो बोध्यः। यत्तु—

शिल्पिनः कारुका वैद्या दासी दासश्च नापिताः।
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः॥

इति पराशरस्मरणं, यदपि च—

कारवः शिल्पिनो वैद्या दासी दासास्तथैव च।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः॥

इति प्राचेतसं तदापद्विषयम्।

दास्यो दासाश्च यत् किंचित्कुर्वन्त्यपि च लीलया।
तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः सदा॥

इतिब्रह्मपुराणात्। अत्र यतस्तदन्यो न क्षमः कर्तुं तस्मात्ते शुचय इति हेतुं वदता तत्कर्तव्यस्याऽन्येन सम्पादने तस्याऽस्पृश्यत्वमस्त्येवेति ध्वनितम्। तथा च सद्यःस्पृश्यत्वस्यापद्विषयत्वं युक्तमेव। इदं च

-यद्यपि सद्यःस्पृश्यत्वं गर्भदासस्यैव । भक्तदासादीनां तत्राऽपि त्र्यहादेव स्पृश्यत्वम् ।

सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः ।

इति स्मृत्यन्तरात् । एवं स्वाऽऽशौचकालेन स्पृश्यत्ववत्कर्माऽधिकारोऽपि स्यादित्याशङ्कयाह-मासादिति । मासात्तु कर्मसु । कर्माधिकारः पुनर्मासेनैवेत्यर्थः । मास इति स्वस्वाऽऽशौचकालोपलक्षणम् । दासानामनेकजातीयत्वात् । अयं च कर्माऽनधिकारः "सद्यःस्पृश्यो गर्भदासः" "गृहकर्मण्यदूषिताः" इत्यादिवचनैरेव व्यतिरेकमुखेनोक्तः । दासवत् दास्या अपि स्वाऽऽशौचकालेन स्पृश्यत्वप्राप्तौ क्वचिदपवादमाह—मासत इति । दासी [सूता] प्रसूता चेन्मासेनैव स्पृश्या भवतीत्यर्थः । तदाहाङ्गिराः—"दास्या मासस्तु सूतकम्" इति । सूतक स्पर्शायोग्यत्वं कर्मायोग्यत्वं च यद्यपि—,

सूतिका सर्ववर्णानां दशरात्रेण शुध्यति ।

ऋतौ च न पृथक्शौचं सर्ववर्णेष्वयं विधिः ॥

इतिप्रचेतसा दशरात्रमेवास्पृश्यत्वं सर्वासामभिहितं, तथाऽपि मासास्पृश्यत्वं गृहलेपनजलाहरणादौ, गृहकर्मण्येवोक्तमिति ध्येयम् । "गृहकर्मण्यदूषिताः" इत्यस्यैवानेनोपपादनात् । तथा च प्राचेतसमङ्गस्पर्शे स्नानाभावमात्रप्रतिपादकमिति न विरोधः । इदं च दासाऽऽशौचं सहवासेऽपि न स्वामिनो भवति ।

कारणाद्गच्छति प्रैष्यं तदाऽऽशौचं न तान् व्रजेत् ।

इतिवचनात् । प्रैष्यं दास्यं, गच्छति प्राप्ते यदाऽऽशौचं तत्कारणात् सहवासादिनः स्वामिनो न व्रजेदित्यर्थः । अत्र केचित् स्वामिनः प्रसवमरणयोर्दासानां स्वामितुल्यमाशौचमनेनोच्यते इत्याहुः । तत्तुच्छम् । "मासात्तु कर्मसु । योग्याः स्युः" ( पद्य० ६५ ) इत्यस्याऽसङ्गतत्वात् । न हि स्वामिनः प्रसवमरणयोर्दासानामयं कर्माऽनधिकारः सम्भवति । तदाशौचकालेनैव तेषां शुद्धत्वात् । किं च स्वामिप्रसवमरणनिमित्तकदासाऽऽशौचप्रस्तावे दास्याः प्रसवनिमित्तस्यास्पृश्यत्ववचनस्य सुतरामसङ्गतत्वाऽऽपातात् । तस्मादुक्तव्याख्यैव साधीयसीति । तर्हि स्वामिनः प्रसवमरणयोर्दासानामाशौचं किमिति चेत् स्वामिजातीयमेव प्रत्येहि । तद्गृहवासतदन्नभोजनतत्संस्पर्शकरणात् । तदभावे दासस्वामिभावमात्रे किमिति चेत्—

ग्रामेश्वरे कुलपतौ शुद्धिर्नक्षत्रदर्शनात् ।

इतिवृद्धमानवमेवाऽवेहि । कुलपतिर्गर्भदासादेः कुलस्य स्वामीति ॥६५॥

सपिण्डानां प्रसवमरणयोर्दशाहादाऽऽशौचमुक्तं तस्य क्वचिदपवादमाह—

अनुलोमाऽऽश्रितायास्तु भार्यायाः प्रसवे मृतौ ॥
पुत्रस्याऽनौरसस्याऽपि समीपे त्रिदिनाच्छुचिः ॥ ६६ ॥

अनुलोमाश्रितेति । तुशब्दोऽर्थान्तरप्रस्तावनार्थः । अनुलोममनुक्रमेणाश्रिता अनुलोमाश्रिता । स्वजातीयमुत्कृष्टजातीयं वा पुरुषान्तरमाश्रिता तादृश्याः स्वभार्यायाः प्रसवे आश्रितपुरुषेणाऽपत्यजनने मरणे च पूर्वो भर्त्ता त्रिदिनं त्रयाणां दिनानां समाहारस्त्रिदिनं तस्माच्छुचिः । कर्मयोग्यः स्पर्शयोग्यश्च भवतीत्यर्थः । तदाह बृहस्पतिः—

अन्याऽऽश्रितेषु दारेषु परपत्नीसुतेषु च ।
मृतेष्वाप्लुत्य शुध्येत्तु त्रिरात्रेण द्विजोत्तमः ॥ इति ।

प्रतिलोमाद्याऽऽश्रितायास्त्वाशौचाऽऽभावमेव वक्ष्यति । इदमप्यबहिष्कृतानाम् । बहिः कृतानां तदभावस्य वक्ष्यमाणत्वात् । उक्तमर्थमन्यत्राप्यतिदिशति–पुत्रस्येति । अनौरसाः क्षेत्रजो गूढजः कानीनः सहोढजः पुत्रिकापुत्रश्चेति । तेषां प्रसवे उत्पत्तौ क्रीतकृत्रिमदत्तक(१)स्वयन्दत्ताऽपविद्धानामुत्पत्त्यनन्तरमन्यपुत्रत्वोत्पत्तेर्न ग्रहीतुस्तत्प्रसवाऽऽशौचं सम्भवतीति तदपत्यप्रसवे तेषां मरणे च त्रिरात्राऽऽशौचं ग्रहीतुर्भवतीत्यर्थः । पौनर्भवस्य स्वस्यपूर्वाप्रसव एव वक्ष्यते । इदं च ग्रहीतृसमानजातीयानामेव पुत्राणामिति ध्येयम् । तदाह ब्रह्मपुराणम्—

औरसं वर्जयित्वा तु सर्ववर्णेषु सर्वदा ।
क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च ॥
आशौचं तु त्रिरात्रं स्यात्समानामिति निश्चयः । इति ।

सर्वदा सर्वकालमुपनयनाद्यनन्तरमपि । समानां गृहीतपुत्रसमानजातीयानां पितृणामित्यर्थः । केचित्समवर्णेष्विति पठन्ति । तेषां समानामित्यनेन पौनरुक्त्यं स्यात् । यद्यपि "परपत्नीसुतेषु च" इत्यनेन क्रीतकृत्रिमदत्रिमस्वयन्दत्ताऽपविद्धपुत्रिकापुत्रकानीना एव बृहस्पतिनोक्तास्तथाऽपि क्षेत्रजादीनामपि तदुपलक्षणम् । "औरसं वर्जयित्वा" "क्षेत्रजादिषु पुत्रेषु" इत्यनेन ब्राह्मे सर्वेषामविशेषोपादानात् । इदं च

---

(१) 'स्वयं ग्रहीतुर्भवतीत्यर्थः । पौनर्भवस्याऽप्यन्यपूर्वाप्रसव एव वक्ष्यते । इदं गृहीतसमानजातीयानामेव दत्ताऽपविद्धानामुत्पत्त्यनन्तरमन्यपुत्रत्वोत्पत्तेर्न ग्रहीतुस्तत्प्रसवाऽऽशौचं सम्भवतीति तदपत्यप्रसवे तेषां मरणे च त्रिरात्राऽऽशौचं पुत्राणामिति ध्येयम्' इति क० पु०पाठः ।

त्रिरात्राऽऽशौचविधानं यत्प्रतियोगिकं भार्यात्वं पुत्रत्वं च तस्यैव। सपिण्डानां तु पृथगाह मरीचिः—

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥ इति ।

परः पूर्वः पतित्वेन पितृत्वेन च ययोर्भार्यापुत्रयोस्तौ पर पूर्वौ तयोः परपूर्वयोरित्यर्थः । सोदकसगोत्राणामप्याशौचमाह प्रजापतिः—

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥ इति ।

यत्तु सपिण्डानामाशौचाऽभाव एव । "गोत्रिणः स्नानशुद्धाः स्युः" इतिप्रजापतिस्मरणात् । इतिमिताक्षरोक्तं तच्चिन्त्यम् । "एकाहस्तु सपिण्डानाम्" इतिमरीचिवचनविरोधात् । "गोत्रिणः स्नानशुद्धाःस्युः" इत्यस्य सोदकादिविषयत्वसम्भवाच्च । वचनद्वयेऽपि सपिण्डगोत्रिशब्दयोरेव च विशेषोपादानात् । यद्यपि मारीचे परपूर्वाशब्दः स्वस्वामिर्थेनान्यदीयां स्वयंपरिगृहीतामभिधत्ते प्राजापत्ये चाऽन्याश्रितशब्दः स्वीयामन्यपरिगृहीतां च स्त्रियमभिधत्ते इत्यर्थभेदादुभयव्यवस्थाऽपि सम्भवति तथाऽपि—

एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ।

इत्यनेनोभयत्राऽपि सपिण्डानामेकाहविधाने "गोत्रिणः स्नानशुद्धाः स्युः" इति प्राजापत्यवचनविरोधः स्यादिति नेयं व्यवस्थेति । यदपि च 'यत्र पितुः त्रिरात्न्यूनमाशौचं तत्र "गोत्रिणः स्नानशुद्धाः" इति प्राजापत्यं प्रवर्त्तते, यत्र पितुस्त्रिरात्रं तत्र "एकाहस्तु सपिण्डानाम्" इति मारीचमवतिष्ठते, इति मदनविवरणं तदप्यापातत एव ।

गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ।

इत्यत्राऽपि पितुस्त्रिरात्रबोधनादित्यलमापातदर्शिनाममृतादीनां मर्मोद्घाटनेनेति । तस्मादुक्तैव व्याख्या जाताभिख्या माधवाऽनुमता साधीयसीति । तथाऽपि "गोत्रिणः स्नानशुद्धाः" इति सपिण्डविषयमेवाऽभिप्रेतं तच्चसन्निधाने तदस्त्विति उभयशेषं विशेषमाह—समीप इति । यदिदमन्याऽऽश्रितभार्याऽऽशौचमनौरसपुत्राऽऽशौचं च त्रिरात्रमित्युक्तं तत्समीपे एकदेशाऽवस्थितौ ज्ञेयम् । देशान्तरे पृथगभिधानात् ॥ ६६ ॥

तदेवाह—

अन्यत्र तु दिनादन्यपूर्वपत्न्या दिनत्रयात् ।
बैजिकादभिसम्बन्धादनुरुध्यादघं त्र्यहम् ॥ ६७ ॥

अन्यत्र त्विति । तुशब्दो विषयविशेषसमर्पणार्थः । अन्यत्र देशान्तरस्थितयोरन्याश्रितभार्यौरसपुत्रयोर्दिनाद्धोरात्रात्तत्पतिपित्रोः शुद्धिः । तदाह याज्ञवल्क्यः—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । ( या० ३-२५ ) इति ।

"अहस्त्वदत्तकन्यासु" ( या० ३-२४ ) इत्यतोऽहरित्यनुवर्तते । अन्याश्रितस्वभार्याऽऽशौचकथनप्रसङ्गेन स्वपरिगृहीतान्यपूर्वाऽऽशौचमप्याह—अन्यपूर्वेति । अन्यो दानेनोपभोगेन वा पूर्वो यस्याः साऽन्यपूर्वा । त्रिविधा पुनर्भूश्चतुर्विधा स्वैरिणी चेति सप्तविधा । यथाऽऽह नारदः—

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता मनीषिभिः ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥ इति ॥

सा चासौ पत्नी च पत्नी कथंचन विवाहविधिना परिगृहीता । पत्नीशब्दसामर्थ्यादन्यत्र भार्यापदेनोपादानादवरुद्धायाः पृथगाशौचविधानाच्च । तस्याः प्रसवे मरणे च परिग्रहीतुर्दिनत्रयाच्छुद्धिरिति । तदाह शङ्खः—

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते ॥ इति ।

हारीतोऽपि—

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
मातामहे त्रिरात्रं स्यादेकाहं त्वसपिण्डतः ॥ इति ।

असपिण्डे गोत्रजे एकाहमित्यर्थः । तथा त्रिरात्राऽनुवृत्तौ विष्णुः—

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥ इति ॥

कूर्मोऽपि—

परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
त्रिरात्रं स्यात्तथाऽऽचार्ये स्वभार्यास्वन्यगासु च । इति ।

यत्तु—

अन्यपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।
नाऽनध्यायो भवेत्तस्य नाऽऽशौचं नोदकक्रिया ॥

इति कल्पतरुलिखितवचनं, तदपकृष्टजातीयाऽन्यपूर्वाकृतकपुत्रविषयम् । तुल्यजातीयेषु—

आशौचं तु त्रिरात्रं स्यात्समानामिति निश्चयः ।

इति माद्ये त्रिरात्रविधानात् । पौनर्भवस्य प्रसवे मरणे पैतृवेवाऽऽ-

शौचमित्याह—बैजिकादभीति । बीजं शुक्रं तन्निमित्तो बैजिकः । अभिसम्बन्धोऽपत्योत्पादनाऽनुकूलो व्यापारः । तस्मादर्द्धं=त्रिरात्रम् । अर्धं=आशौचम् । अनुवन्ध्यादनुवर्तेत । बैजिकादित्यनेनाऽन्यपूर्वास्वपत्योत्पत्तौ बीजमात्रसम्बन्ध एव, न तु पत्नीद्वारकोऽपि । तस्याः पत्नीत्वाऽभावादिति । यद्यप्यौरसपुत्राऽऽशौचकथनेनैव पौनर्भवाऽऽशौचपरिमापार्थमिदमारभ्यते इति न पौनरुक्त्यम् । अथाप्यसन्निधौ स्वहारामेव । "अन्यत्र तु दिनात्" इत्यस्य सन्दंशन्यायेनोभयशेषत्वात् ॥८७॥

इदानीमवरुद्धाऽन्यपूर्वाऽऽशौचमाह—

अन्यपूर्वाऽवरुद्धासु त्रिदिनाच्छुद्धिरिष्यते ।
तास्वेवाऽनन्यपूर्वासु पञ्चाहोभिर्विशुद्ध्यति ॥ ८८ ॥

अन्यपूर्वेति । अन्यपूर्वाः पूर्वोक्ताः । ताश्चता अवरुद्धाश्च पुरुषान्तरोपभोगनिरुद्धाः । नियतपुरुषपरिगृहीता दास्यः ।

अवरुद्धासु दासीषु भुजिष्यासु तथैव च । (याज्ञ० ३-२९०)

इति याज्ञवल्क्येनावरुद्धानां दासीविशेषत्वबोधनात् । तासु प्रसूतासु मृतासु च त्रिदिनं त्रयाणां दिनानां समाहारस्त्रिदिनं तस्मात् परिग्रहीतुः शुद्धिरिष्यते पूर्वैरित्यर्थः । तदाह ब्रह्मपुराणम्—

पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता ।
यं संश्रितवती भूयस्तस्याऽऽशौचं भवेत्त्र्यहम् ॥ इति ।

१ या कन्या पित्रा कस्मैचिद्दत्ता । सा च तं परित्यज्य स्वातन्त्र्येणाऽन्यं सवर्णमुत्तमं वर्णं वाऽऽश्रिता सा यं संश्रितवती=सम्यक् श्रितवती येनाऽवरुद्धेति यावत् । तस्य त्रिरात्रमाशौचमित्यर्थः । यत्तु—

अन्यपूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः ।
आशौचं सर्वकार्येषु देहे भवति सर्वदा ॥
दानं प्रतिग्रहः स्नानं सर्वं तस्य भवेद्वृथा ।

इति ब्रह्मपुराणीयमेव वचनम्, तत् सर्वदाऽऽशौचबोधनेनान्यपूर्वापरिग्रहनिन्दापरम् । अत एव दानादीनामपार्थकताच हेतुरिति । अत्र सपिण्डानामाशौचं नास्ति ।

मृतायां वा प्रसूतायां नान्येषमिति निश्चयः ।

इतिस्मरणात् । अनन्यपूर्वाऽवरुद्धासु विशेषमाह-तास्विति । तासु अवरुद्धासु अनन्यपूर्वासु प्रसूतासु मृतासु च पञ्चभिर्दिनैः परिग्रहीता शुद्धो भवतीत्यर्थः । तदाह ब्रह्मपुराणम्—

कामादक्षतयोनिश्चेदन्य गत्वा व्यवस्थिता ।
तस्याऽन्यस्य सगोत्रा सा यमाश्रितवती स्वयम् ॥ इति ॥

अक्षतयोनिरन्यपूर्वा यमन्यं गत्वाऽऽश्रितवती । आश्रित्य च स्वं· वश्रिता विशेषेणाऽवस्थिता येनाऽवरुद्धेति यावत् । तस्याऽन्यस्य सा सगोत्रा भवतीत्यर्थः । अनेन सगोत्रत्वाऽभिधानेनाऽऽशौचाऽधिक्यं व्यञ्जितम् । तदेवाचार्यैः पश्चाद्दपदेन स्पष्टीकृतम् । अत्राऽयमाशयः— दशाहाशौचे सपिण्डसगोत्रत्वं निमित्तम् । तदाहतुः शङ्खलिखितौ—

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।

पिण्डश्चोदकदानं च शौचाऽऽशौच तदाऽनुगम् ॥ इति ।

गोत्रे साप्तपौरुषी या सपिण्डता सैव पिण्डोदकदानाऽऽशौचानां निमित्तमित्यर्थः । पिण्डादिसाहचर्यात्पूर्णाऽऽशौचमेवाऽत्र गृह्यते । तथा च अनन्यपूर्वाऽवरुद्धासु ब्राह्मवचनेन सगोत्रत्वबोधनात्, पाणिग्रहणाऽभावेन सापिण्ड्याऽभावाच्च एकमात्रनिमित्तसद्भावादर्धाऽऽशौचं युक्तमेव । न चैवं सगोत्रमातुलयोरप्यर्धाऽऽशौचं स्यादिति वाच्यम् । तत्र विशेषवचनसद्भावात् । न च परिग्रहीत्रा सहैकशरीरारम्भकत्वेन सापिण्ड्यमप्यत्राऽस्तीति वाच्यम् । तस्य वेदयादावतिप्रसक्तत्वेन पतिपत्नीमात्रविषयत्वस्याऽवश्यवाच्यत्वात् । तस्माद्युक्तमत्र पश्चाहकल्पनमित्यलं बहुना । अत्र च सपिण्डानां सगोत्राऽऽशौचमेव । ब्राह्मवचनेन सगोत्रतामात्रबोधनात् ॥ ६८ ॥

इदानीं स्वपत्न्यां व्यभिचारोत्पन्नपुत्रस्याऽऽशौचमाह—

व्यभिचारादहीनेन जायतेऽसौ म्रियेत वा ॥

त्र्यहं तु भर्तुरेव स्यात्सपिण्डानां तु नेदृशम् ॥ ६९ ॥

व्यभिचारादिति । या स्त्री अहीनेन समेनोत्कृष्टेन वा व्यभिचाराज्जायते प्रसूयते तदा असौ जातः पुत्रो म्रियेत चेत्तदा तस्या भर्तुरेव त्र्यहमाशौचं स्यान्न पुनस्तस्याः सपिण्डानामीदृशमाशौचमित्यर्थः । तदाह सुमन्तु —

व्यभिचारेण यस्य स्त्री सूयते म्रियतेऽथ वा ।

भर्तुरेव त्रिरात्रं स्यात्सपिण्डानां तु नैव तत् ॥ इति ।

अहीनेनेतिपदता हीनवर्णव्यभिचारे आशौचाऽधिक्यं ध्वनितम् । तदाहतुः शङ्खलिखितौ—

हीनवर्णात्तु या नारी प्रमादात्प्रसवं व्रजेत् ।

प्रसवे मरणे तज्जमाशौचं नोपशाम्यति ॥ इति ।

हीनवर्णात्=स्वापेक्षया हीनवर्णात् । प्रमादात्=व्यभिचारात् । परिणेतृजनितपुत्रेण सह परिगृहीतायां स्वयमपि पुत्रे जनिते द्वयोरपि

पुत्रयोः प्रसवमरणयोः परिग्रहीतुस्त्रिरात्रमित्याह ब्रह्मपुराणम्—

आदावेकस्य दत्तायां कुत्रचित्पुत्रयोर्द्वयोः।
पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डिनाम्॥ इति।

आदौ प्रथममन्यस्य दत्तायामन्येन परिणीतायां कुत्रचिद्द्वयोः परिणेतृपरिग्रहीत्रोः सकाशादुत्पन्नयोः पुत्रयोः पितुः पूर्वस्य परिग्रहादुत्तरस्य च जननात्पितृत्ववतः परिग्रहीतुर्यत्र पुत्रद्वयोत्पत्तौ मृतौ च त्रिरात्रं स्यात्तत्र सपिण्डानामेकाहमित्यर्थः। यद्यपि पूर्वस्योत्पन्नस्यैव पुत्रत्वेन परिग्रहात्र तदुत्पत्तिनिमित्तमाशौचं परिग्रहीतुः सम्भवति तथाऽपि तन्मरणे तेन वाऽपत्यजनने गर्भाऽवस्थस्य मातृपरिग्रहाऽनन्तरं स्वगृहोत्पत्तौ वाऽशौचं भवत्येवेति न दोषः। न चास्याऽनौरसपुत्राशौचकथनेनास्य पौनरुक्त्यम्। एषामप्यनौरसत्वादिति वाच्यम्। एषां तल्लक्षणाऽभावेन पुत्रेषु परिगणनाऽभावादनाशौचप्रसक्तावस्याऽभिधानात्। पितृद्वयोत्पन्नयोरेकमातृकयोः परस्पराऽशौचमाह ब्रह्मपुराणम्—

एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्।
तयोः स्यात्सूतकादैक्यं मृतकाद्वा परस्परम्॥ इति।

सूतके मृतके च परस्परं तुल्याऽशौचमित्यर्थः। परं तु सूतके एकरात्रं मरणे त्रिरात्रमिति विशेषः। तदाह मरीचिः—

मात्रैकया द्विपितृकौ भ्रातरावन्यगोत्रजौ।
एकाहं सूतकं तत्र त्रिरात्रं मृतकं तयोः॥ इति।

एतेनैकमातृकयोर्द्विपितृकयोः परस्परं प्रसवमरणयोर्मातृजातीयमेवाऽऽशौचमिति हारलताविहितं ब्राह्मवचोविवरणमसंवरणमेवेत्युपेक्षणीयम्। मरीचिवचनविरोधात् इति॥ ६९॥

द्विविधं तावदाशौचं स्पर्शायोग्यत्वं कर्मायोग्यत्वं च, तत्राद्यस्योक्ते कालनिमित्ते अन्यत्राऽप्यतिदिशति—

एवं कर्मनिषेधश्च विधेयस्यैव कर्मणः॥
निषेधविषयः सर्वे त्वादेयाः शुचिभिस्तथा॥ ७०॥

एवमिति। विधीयते विधिना तद्विधेयम्। "अहरहः सन्ध्यामुपासीत" "तानेतान्यज्ञानहरहः कुर्वीत" इत्यादिविधिबोधितस्य सन्ध्यापञ्चमहायज्ञादेर्नित्यनैमित्तिकस्य कर्मणो यः कर्मनिषेधः कर्तव्यतानिषेधः

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते।

इत्येवमादिः सोऽप्येवमेव। पूर्वोक्तकालनिमित्तक इत्यर्थः। यस्मिन् निमित्ते यावत्कालमाशौचं तत्र स्पृश्यत्ववदेव विहितकर्मयोग्यत्वमपि

तन्निमित्तं तावत्कालमध्यवसेयमिति । अत एव मार्कण्डेयपुराणे-

दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादिवर्जितः ।
क्षत्रियो द्वादशाहं च वैश्यो मासार्द्धमेव च ॥
शूद्रश्च मासमासीत निजकर्मविवर्जितः । इति ।

अत्र विधेयस्येतिवदता रागप्राप्तानां भोजनशयनासनादीनामावश्यकानामनिषेधः । अत एवाऽनावश्यकानां रागप्राप्तानां क्षारलवणताम्बूलाऽशनादीनां निषेध एव । एवमाशौचे निषेधविषयस्याऽननुष्ठेयतामभिधाय प्रतिप्रसूतस्य पुनरनुष्ठेयतामाह-निषेधेति । निषेधपूर्वका विधयो निषेधविषयः प्रतिप्रसवाः "वैतानौपासनाः कार्याः" (या०३-१७) इत्यादयस्ते सर्वे तथा आदेया यथा शुचिभिराद्रीयन्ते इति । तदाह पारस्करः—"नित्यानि निवर्तेरन्वैतानवर्जम्" ( पा० गृ० ३-१०-३२ ) "शालाग्नौ चैके" (पा०गृ० ३-१०-३३) "अन्य एतानि कुर्युः" (पा०गृ० ३-१०-३४) इति । अत एव हारीतः—

कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् ।
न तु सत्रस्य विच्छेदं प्रवदन्ति मनीषिणः ॥

इति स्वस्य श्रौतेऽधिकारमाह । तथा तत्तद्धर्मोपरोधार्थं "उपस्पृश्य पिता शुचिः" इतिशुचित्वं चाह । सत्रस्याग्निहोत्रस्याऽनुपरोधार्थमनुष्ठानमितियावत् । शुचित्वाऽभिधानमधिकारनिर्वाहाय । अत एव गोभिलः—

अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी भवेत् ।
पञ्चयज्ञान्न कुर्वीत ह्यशुद्धः पुनरेव सः ॥ इति ।

यत्तु "साग्नेः कर्मण्यन्यकर्तृत्वेऽपि स्वद्रव्यस्यागात्मकं प्रधानं स्वयमेव कार्यम् । तस्याऽनन्यनिष्पाद्यत्वात्" इतिमिताक्षरोक्तं तच्चिन्त्यम् ।

कर्म वैतानिकं कार्यं स्नानोपस्पर्शनात्स्वयम् ।

इत्यनेन स्वस्यैव साङ्गकर्माऽधिकारबोधनात् । न चेदमपि त्यागमात्राऽभिप्रायेणेति वाच्यम् । अनन्यनिष्पाद्यस्य तस्य न्यायबलेनैव स्वकर्तव्यत्वाऽवगमादृचनाऽऽरम्भो निरर्थकः स्यात् । स्वत्वत्यागस्य श्रौतस्मार्तसाधारणत्वात् "कर्म वैतानिकम्" इति विशेषोपादानं चाऽनर्थकं स्यात् । किं च

अग्निहोत्रस्य होमार्थं शुद्धिस्तात्कालिकी भवेत् ।

इत्यनेनाऽग्निहोत्रहोमार्थं शुद्धिरभिधीयते । होमश्च स्वत्वत्यागपूर्वको द्रव्यप्रक्षेपान्तो व्यापारः । तदुक्तं-"जुहोतिरासेचनाधिकः स्यात्" इति । ततश्च त्यागमात्रस्य स्वकर्तृकत्वे अन्यकर्तृके प्रक्षेपे स्वस्य शुद्ध्यभिधानं नोपपद्यते । तस्मात्साग्नेः वैतानिके होमे स्वस्याऽधिकारे इत्य-

लम् । उपपादितं चैतच्छ्राद्धकल्पलतायामेवाऽस्माभिरिति नेहोच्यते ॥७०॥

इदानीमाशौचपरिगृहीतेषु द्रव्येष्वप्याशौचमित्याह—

अशुचीनां नराणां तु द्रव्याण्यप्यशुचीनि हि ॥

तस्मात्तान्यपि वर्ज्यानि शुचीनामिति निश्चयः ॥ ७१ ॥

अशुचीनामिति । जननमरणनिमित्तेनाऽऽशौचेनाऽऽशुचीनां नराणां यानि द्रव्याणि अन्नादीनि तान्यप्यशुचीन्येव । तुशब्द एवकारार्थः । इष्टाऽदृष्टार्थकर्मायोग्यानीति यावत् । तस्मादशुचित्वादेव शुचीनामसपिण्डानां तानि वर्ज्यानि परिहरणीयानीति निश्चयः शास्त्रज्ञानाम् । अत एव यमः—

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । इति ।

विष्णुरपि—"नाशौचे कस्य चिद्न्नमश्नीयात्" इति । उभयत्र=जननमरणयोः । कुलस्याऽऽशौचयुक्तस्य । अन्नमसपिण्डैर्न भोज्यम् । सकुल्यानां तु न दोष. ।

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ।

इति यमस्मरणात् ॥ ७१ ॥

उक्तमशुचित्वं द्रव्यविशेषेणाऽपवदति—

क्षीराज्यदधितक्राम्बुतिलपुष्पफलं गुडम् ।

शाककाष्ठौषधं मूलं ग्राह्यं स्यात्स्वाम्यनुज्ञया ॥७२॥

क्षीराज्येति । क्षीरं=पयः । आज्यं=सर्पिः । दधि प्रसिद्धम् । तक्रं=उदश्वित् । अम्बु=जलम् । तिलाः प्रसिद्धाः : पुष्पं=मल्लिकादि । फलं=आम्रादि । तेषां समाहारः । समाहारेण च लवणमधुमांसतृणलोष्ठाऽजिनशुष्कान्नपण्यानि समाहियन्ते । गुडः प्रसिद्धः । शाकं=वास्तुकादि ।

मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः ।

त्वक् पुष्पं कवचं च चेति शाकं दशविधं स्मृतम् ॥

इति स्मृत्यन्तरोक्तम् । काष्ठौषधमितिसमाहारेण तैलं गृह्यते । मूलं=मूलकादि । इदं सर्वमाशौचसम्बन्ध्यपि द्रव्यजातं स्वाम्यनुज्ञयाऽन्यः स्वयमेव गृह्णीयादित्यर्थः । तदाह मरीचिः—

लवणे मधुमांसे च पुष्पमूलफलेषु च ।

शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥

तिलौषधाऽजिने चैव पक्कापक्के स्वयंग्रहः ।

पण्येषु चैव सर्वेषु नाऽऽशौचं मृतसूतके ॥ इति ।

पक्कं मोदकादि । अपक्कं=तण्डुलादि । इदं च पक्काऽपक्काऽभ्यनुज्ञान-

मन्नसत्रप्रवृत्तविषयम् । तथा चाङ्गिराः—

अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् ।
भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥ इति ।

पक्वान्नमोदनादि । ब्रह्मपुराणेऽपि—

लवणं मधु मांसं च पुष्पमूलफलानि च ।
काष्ठं लोष्ठं तृणं पर्णं दधि क्षीरं घृतं तथा ॥
औषधं तैलमजिनं शुष्कमन्नं च नित्यशः ।
आशौचिनां गृहाद् ग्राह्यं स्वयं पण्यं च मूल्यजम् ॥ इति ।

कूर्मपुराणेऽपि—

हिरण्यधान्यगोवासस्तिलान्नगुडसर्पिषाम् ।
फलानि पुष्पशाकं च लवणं काष्ठमेव च ॥
तोयं दधि घृतं क्षीरमौषधं तैलमेव च ॥
आशौचिनां गृहाद् ग्राह्यं शुष्कान्नं चैव नित्यशः ॥ इति ।

तथा च कश्यपः-"तैः सह ब्राह्मणो न वसेन्न याचेन्न दद्याद्द्विपदचतुष्पदधान्यहिरण्यवस्त्रवर्जम्" इति । याचनदानयोरुभयोरपि प्रतिप्रसवोऽयं द्विपदादिरित्यर्थः । जन्माऽऽशौचे केषांचित्प्रतिग्रहेऽपि न दोषः । तदाहतुः शङ्खलिखितौ-"कुमारप्रसवे नाड्यामच्छिन्नायां गुडतिलतैलहिरण्यवस्त्रप्रावरणगोधान्यप्रतिग्रहेष्वदोषस्तदहः" इति । एके गुर्वर्थे कुर्वते इति ॥ ७२ ॥

अन्यत्राऽप्याशौचाऽपवादमाह—

संसर्गाद्यस्य वाऽऽशौचं यस्यातिक्रान्तकालजम् ।
तदीयस्य पदार्थस्य नाऽऽशौचं विद्यते क्वचित् ॥ ७३ ॥

संसर्गादिति । यस्य संसर्गात् शवसंस्पर्शरूपाद्याशौचं भवति, यस्य चाऽतिक्रान्तकालजमाशौचं पश्चाच्छ्रवणेन भवति, तदीयस्य भार्यापुत्रादेः पदार्थस्य च जलान्नादेराशौचं क्वचिदपि देशकालनिमित्तादिभेदेऽपि न भवति इति । तदाहाङ्गिराः—

आशौचं यस्य संसर्गादापतेद् गृहमेधिनः ।
क्रियास्तस्य न लुप्यन्ति गृह्याणां च न तद्भवेत् ॥
अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद्गृही ।
त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित् ॥ इति ॥
गृह्याणां गृहे भवानां भार्यापुत्रादीनाम् ॥ ३७ ॥

एवं च द्रव्यविशेषेणाऽऽशौचमपोद्य पुरुषविशेषेणाप्याशौचमप-

वदति—

> वानप्रस्थयतिब्रह्मचारिणः शुचयः सदा ॥
> इतरेऽपि समारब्धप्रयोगाः शुचयः स्मृताः ॥ ७४ ॥

वानप्रस्थेति । वानप्रस्थस्तृतीयाश्रमी । यती सन्न्यासी एकदण्डः त्रिदण्डश्च । ब्रह्मचारी नैष्ठिक उपकुर्वाणकश्च । एते सदा सर्वकालं, आश्रममात्रपरिग्रहेण सपिण्डजननमरणयोः शुद्धाः । स्पर्शकर्मयोग्या इत्यर्थः । तदाह याज्ञवल्क्य —

> सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा । ( या० ३-२८ ) इति ।

अत्र दातृशब्देन नित्यं दातैव न प्रतिग्रहीता । तादृशो वैखानस उच्यते । ब्रह्मवित् सन्न्यासी । सुमन्तुरपि-"दीक्षितयतिब्रह्मचारिणां नाऽऽशौचम्" इति । ब्रह्मपुराणेऽपि—

> नैष्ठिकस्याऽथवाऽन्यस्य भिक्षार्थं प्रस्थितस्य च ।
> वानप्रस्थस्य वाऽन्यस्य साधिकारस्य, सर्वथा ॥
> प्रतिग्रहाऽधिकाराच्च निवृत्तस्य न विद्यते ॥ इति ।

नैष्ठिकस्य ब्रह्मचारिणोऽथवाऽन्यस्य उपकुर्वाणकस्य भिक्षार्थं प्रस्थितस्य भिक्षोः सन्न्यासिनश्च । वानप्रस्थस्य वाऽन्यस्य उभयविधस्य । उभे विधे दर्शयति-साधिकारेति । साधिकारस्य ग्रामादष्टमासाऽऽहरणाऽधिकारवतः । सर्वथा प्रतिग्रहाधिकारान्निवृत्तस्य वन्यफलमूलाशिनो वायुभक्षादेर्वा सपिण्डजननमरणयोराशौचं न विद्यते इति । कौर्मेऽपि—

> नैष्ठिकानां वनस्थानां यतिनां ब्रह्मचारिणाम् ।
> नाऽशौचं कीर्तितं सद्भिः पतिते च तथा मृते ॥ इति ।

ब्रह्मचारिणामुपकुर्वाणकानाम् । नैष्ठिकस्य पृथगुपादानात् । देवलोऽपि—

> नैष्ठिकानां वनस्थानां यतिनां ब्रह्मचारिणाम् ।
> नाऽऽशौचं सूतके प्रोक्तं शावे चाऽपि तथैव च ॥ इति ।

अयं चाऽऽशौचाऽभावो ब्रह्मचारिप्रभृतीनामाशौचिसंसर्गाऽभावे ।

> ब्रह्मचारी गृहे येषां हूयते च हुताशनः ।
> सम्पर्कं चेन्न कुर्वन्ति न तेषां सूतकं भवेत् ॥ ( परा० ३-१९ )

इतिपराशरस्मरणात् । ब्रह्मचार्यग्निहोत्रिणोराशौचिसंसर्गाऽभावे नाशौचमित्यर्थः । विशेषं चोपरिष्टाद्वक्ष्यामः । इतरेऽपि ऋत्विग्दीक्षितसत्रिव्रतिप्रभृतयः समारब्धप्रयोगाः=प्रयोगमारब्धवन्तः तत्र तत्र

शुचयः स्मृताः मन्वादिभिरित्यर्थः। तदाह याज्ञवल्क्यः—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ ( या० ३-२८ )
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ (या० ३-२९) इति।

ब्रह्मपुराणेऽपि—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः।
पश्चाद्दशाहे पतिते न भवेदिति निश्चयः॥
तद्वद् गृहीतदीक्षस्य त्रैविद्यस्य महामखे।
स्नानं त्ववभृथे यावत्तावत्तस्यैव विद्यते ॥ इति।

एतच्चाऽऽशौचाऽभाववचनं पित्राऽऽशाचव्यतिरेकेण। तदाह शङ्खः—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम्।
नैवाऽऽशौचं भवेत्तेषां पित्रोस्तु मरणं विना ॥ इति ॥ ७४ ॥

आरब्धप्रयोगाणां शुचित्वमित्युक्तं तदारब्धप्रयोगमात्रे सर्वत्रेत्याह—

सूतकात् प्राक् समारब्धमनेकाहं तु यद्व्रतम् ॥
उपवासादिकं कुर्यान्न तु दानार्चनं जपम् ॥ ७५ ॥

सूतकात्प्रागिति। सूतकोत्पत्तिदिनात्प्राग्भवेषु दिनेष्वारब्धं यदनेकदिनसाध्यं मासोपवासकृच्छ्रचान्द्रायणादिकं व्रतम्, उपलक्षणमेतत् यज्ञान्यद्यज्ञविवाहश्राद्धहोमार्चनजपादिकम् ,तावन्मात्रमाशौचदिनेष्वपि कुर्यात् अनुवर्तयेत्, न तु नित्यं नैमित्तिकं दानार्चनजपादि कुर्यादित्यर्थः। तदाह विष्णुः—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ इति।

अयं च तावन्मात्रे एवाऽऽशौचाऽभावो नान्यत्र। अत एव विष्णुना—"न राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्मणि" इति प्रतिनियतविषय एवाऽऽशौचाऽभावो दर्शितः। स्मृत्यन्तरेऽपि—

नित्यमन्नप्रदस्याऽपि कृच्छ्रचान्द्रायणादिषु।
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ॥ इति।

नित्यमन्नदाने कृच्छ्रचान्द्रायणादिव्रतेषु कृच्छ्रेषु=कष्टेषु ज्वरादिषु विहिते होमादौ होमदानजपादौ निवृत्ते समाप्ते तदङ्गतया विहिते ब्राह्मणभोजनदक्षिणादानाभिषेकादिषु च नाशौचमित्यर्थः ॥ ७५ ॥

आशौचमध्येऽपि पूर्वारब्धप्रयोगेऽनुष्ठीयमाने कथञ्चित्तदङ्गातिपत्तौ किं कार्यमित्यत आह—

सूतकाहेषु यत् किञ्चिदानाद्यन्तरितं व्रते ॥
सूतकाऽनन्तरे त्वह्नि तत्कर्तव्यमतन्द्रितैः ॥ ७६ ॥

सूतकाहेष्विति। सूतकस्याहानि सूतकाहाः। "राजाहः सखिभ्यष्टच्" (पा० सू० ५-४-९१) इत्यनेन टचि कृतेऽजन्तता। तेषु सूतकाहेषु। पूर्वाऽऽरब्धे व्रते कार्तिकमाघवैशाखादिव्रतेऽनुष्ठीयमाने तदङ्गतया प्रत्यहं विहितं यद्दीपतिलयवादिदानं, आदिशब्दाद्ब्राह्मणभोजनं च तद्वैवान्मानुषाद्वाऽपराधात्तस्मिन् कालेऽननुष्ठानेनान्तरितं चेत्तदा सूतकाऽनन्तरदिने अतन्द्रितैस्तदनुष्ठाने तत्कालस्यैवान्तरितसङ्ख्यापरिगणनेन सर्वं कर्तव्यम्। न तु मुख्यकालाऽतिपातनिबन्धनं तदननुष्ठानमेव, गौणकालेऽप्यनुष्ठानसम्भवात्। अत्र च व्रताङ्गं दिनादिकमित्युपलक्षणम्। तेन यत्तद्दिनकर्तव्यतया प्राप्तं नित्यहोमादि तदप्यन्तरितं सूतकान्ते कार्यम्। अत एवाऽऽश्वलायनः—

स्मार्ताग्निरात्मनोऽन्येषामभावे सूतकादिषु।
समारोप्य तदन्तेषु विहृत्य जुहुयात्स्वयम्॥
श्रौताग्निस्तु सकृद् हुत्वा समासे वा स्वयं हुनेत् ॥ इति।

आत्मनः सूतकादिषु सम्भावितेषु अन्येषां चाभावे सूतकात्प्रागेव समारोप्य सूतकान्ते विहृत्य प्रायश्चित्तपूर्वकमतीतहोमं कुर्यादित्यर्थः। तथा प्रत्याब्दिकमप्याऽऽशौचान्ते कार्यम्। तदाह ऋष्यशृङ्गः—

आब्दिके चैव सम्प्राप्ते आशौचं जायते यदि।
आशौचे तु व्यतिक्रान्ते तत्र श्राद्धं विधीयते॥ इति।

गोभिलोऽपि—

दैवात्प्रत्याब्दिकश्राद्धे त्वन्तरा मृतसूतके।
आशौचाऽनन्तरं कुर्यात्तन्मासेन्दुक्षयेऽपि च॥ इति।

अत्राऽऽशौचाऽनन्तरमिति सामान्याऽभिधानेऽपि सूतके एकादशादिने, मृतके त्रयोदशादिने इति द्रष्टव्यम्।

मृते त्रयोदशे श्राद्धं वृद्धावेकादशेऽहनि।

इति विशेषस्मरणात् एवमाशौचप्रतिबद्धानामप्येकादशादिनमारभ्य पुनरनुष्ठानम्। तदाह हारीतः—

ततस्त्वेकादशदिने यज्ञस्वाध्ययनानि च।
प्रवर्तन्ते क्रियाश्चैव इत्येवं मेनिरब्रवीत्॥ इति।

जाबालोऽपि—

सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥ इति ॥ ७६ ॥

पूर्वारब्धाऽनुष्ठाने नाऽऽशौचमित्युक्तम् । इदानीमपूर्वाऽऽरम्भेऽपि कचिन्नाऽऽशौचमित्याह—

अनारब्धेऽपि शान्त्यादौ तत्कालैकक्षमे सति ।
सद्योऽन्नश्पक्कुटुम्बार्थं प्रतिग्रहकृतौ तथा ॥ ७७ ॥

अनारब्धेऽपीति । सूतकात्मागनारब्धेऽपि शान्त्यादौ तीव्रामयोपशामके शान्तिकजपहोमादौ तत्कालैकक्षमे सति स एव कालस्तत्कालः तत्काल एव एकस्मिन् क्षमं तत्कालैकक्षमं तस्मिन् । कालान्तरप्रतीक्षायां रोगग्रस्तस्य भयेन तत्कालैककर्तव्यताकत्वेनाऽवधारिते नाऽऽशौचमिति । तदाह विष्णुः–"न देशविभ्रमे नापद्यपि च कष्टायाम्" इति । देशविभ्रमे देशोत्पातनिमित्तके कष्टापत्तिनिमित्तके च शान्त्यादावित्यर्थः । ब्रह्मपुराणेऽपि—

गोमङ्गलादौ वैश्यानां रक्षाकालात्ययादपि ।
आशौचं न भवेल्लोके सर्वत्राऽन्यत्र विद्यते ॥ इति ।

वैश्यानां गोपीडोपशमार्थं कर्तव्ये मङ्गले शान्तिकपौष्टिकादौ नाऽऽशौचम् । तत्र हेतुः रक्षाकालात्ययादिति । अन्यथा पीडासमकालमक्रियमाणे शान्त्यादौ गवादीनां रक्षाकालोऽतीयादिति । गोवैश्याविपदामुपलक्षणतयाऽन्यत्राऽप्यन्यथाऽनुपपत्त्याऽऽशौचाभावो बोध्यः। न्यायसाम्यात् । 'तत्कालैकक्षमे' इत्यनेन यद्यत्कालान्तरे कर्तुमशक्यं ग्रहणस्नानादि तदप्याशौचमध्ये एव कार्यमित्युक्तं भवति । अत एव वसिष्ठः—

चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेऽपि च ।
अस्नायी मृत्युमाप्नोति स्नायी मृत्युं न विन्दति ॥
सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥ इति ।

अत्र तावच्छुद्धिरिति वदता तत्कालकर्तव्ये स्नानदानश्राद्धहोमादौ सर्वथाऽऽशौचाभाव इति दर्शितम् । अत एव पुलस्त्यः—

सन्निहित्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
सद्यधर्मप्रवृत्तस्य दानकर्मफलैषिणः ॥ इति ।

दानकर्मसाध्यफलेच्छोः राहुग्रस्ते सूर्ये सन्निहिते तीर्थविशेषे स्नात्वा दाने प्रवृत्तस्य सद्यःशौचमित्यर्थः । तथा कालान्तरालभ्येषु

-तीर्थपर्वादिष्वपि नाऽऽशौचम्। तदाह पुलस्त्यः—

अम्बुमध्ये गवां गोष्ठे तीर्थेष्वपि च पर्वसु।
राहोर्दर्शनकाले च सूतकं न कदाचन॥ इति।

'अम्बुमध्ये गवां गोष्ठे' इति स्नावश्यकानित्यकाम्याऽभिप्रायेण। इतरत्सर्वमलस्पर्शयोगाऽभिप्रायेण। पर्वसु=कापिलषष्ठ्ययनविषुवदादिषु। अत एव बृहस्पतिः—

कन्याविवाहे सङ्क्रान्तौ सूतकं न कदाचन। इति।

पैठीनसिरपि—

विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि।
न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत्॥ इति।

तथा सद्यस्तत्कालमेव क्षुत्क्षामतया भ्रश्यत्=विनश्यत् कुटुम्बमवश्यभरणीयं मातापितृभार्यापुत्रादि तदर्थं=तत्पोषणाय। प्रतिग्रहकर्तॄ=प्रतिग्रहकरणेऽपि। तथा आशौचाऽभाव इत्यर्थः। कुसूलकुम्भ्याहिताश्वस्तनधान्यानां चतुर्विधानां गृहस्थानां मध्ये यस्य यावत्कालमन्नसद्भावेनार्त्यभावस्तस्य तावत्कालमाशौचम्। समाप्तत्वे प्रतिग्रहाकरणे सकलकुटुम्बापत्प्रसङ्गेन तत्पोषणाय प्रतिग्रहार्थमाशौचाऽभावो युक्त एव। अत एव मनुना—

कुसूलधान्यको वा स्यात्कुम्भीधान्यक एव वा।
त्र्यहैहिको वाऽपि भवेदश्वस्तनिक एव वा॥ (मनु०४-७)

इति चातुर्विध्यं गृहिणामभिधाय तदभिप्रायेणैव

दशाहं शावमाशौचं सपिण्डेषु विधीयते।
अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव वा॥ (मनु०-५-५९)

इत्याशौचेऽपि कल्पचतुष्टयमभिहितम्। इदमेवाऽभिप्रेत्य वृत्तिसङ्कोचेनाऽऽशौचसङ्कोचमाह सङ्ग्रहकारः—

शिलोञ्छायाचितैर्जीवन् सद्यःशौचो द्विजोत्तमः। इति॥ ७७॥

तात्कालिकक्षमे शान्त्यादौ नाशौचमित्युक्तम्, तत्र स्वयमपि कानिचिदुदाहरणान्याह—

भूमिरक्षणकृत्येषु राज्ञां तत्प्रेषितस्य च।
तथा कर्मविपाकेषु वर्द्धमानामयस्य च॥ ७८॥

भूमिरक्षणेति। भूमेः पृथिव्याः यान्येकदेशभूतानि मण्डलानि। कृत्स्नभूमेरेकस्वामिकत्वाऽसम्भवात्, राज्ञामिति बहुवचनाच्च। तेषां यद्रक्षणं तदीयप्रजापालनं तत् येन चरदूतदानमानसत्कारव्यवहारदर्शना

दिना [विना] न निर्वहति तत्र राज्ञां भूपालानां नाऽऽशौचम्। तदाह मनुः-

राज्ञो माहात्मिके स्थाने सद्यःशौचं विधीयते।
प्रजानां परिरक्षार्थमासनं तत्र कारणम् ॥ (मनु०५-९४) इति।

माहात्मिकं माहात्म्यद्योतकं व्यवहारदर्शनादिस्थानम्। यमोऽपि—

राज्ञामात्ययिके कार्ये सद्यःशौचं विधीयते।
प्रजानां रक्षणार्थाय आसनं चात्र कारणम् ॥ इति।

आत्ययिके=विलम्बासहिष्णौ। गौतमोऽपि—"राज्ञां च कार्याविघातार्थम्" (गौ०ध०१४-४२) इति। विष्णुरपि-"न राज्ञां राजकर्मणि" इति। ब्राह्मेऽपि—

राजा करोति यत् कर्म स्वप्नेऽप्यन्यस्य तत्कथम्।
एवं सति नृपः शुद्धः संस्पृश्यो मृतसूतके ॥ इति।

तथा कृत्येषु कृतिमर्हन्तीति कृत्यानि अवश्यकर्तव्यानि सङ्ग्रामसन्नहनप्रास्थानिकशान्तिकदेशोपप्लवप्रजाविप्लवोत्पातशान्तिकादीनि तेष्वपि राज्ञां नाऽऽशौचम्। तदाह हारीतः—

सङ्ग्रामस्थश्च राजन्यो वैश्यो मध्ये गवां स्थितः।
श्रोत्रियब्राह्मणो नित्यं ब्रह्मचारी च वै शुचिः ॥ इति।

आश्वलायनोऽपि-"सङ्ग्रामे समुपोढे च राजानं सद्याह्वयेत्"इति।

ब्रह्मपुराणे—

प्रयास्यतश्च सङ्ग्रामे होमे प्रास्थानिके सति। इति।

पराशरः—

दुर्भिक्षे राष्ट्रसम्पाते आपदां च समुद्भवे।
उपसर्गमृते चैव सद्यःशौचं विधीयते ॥ इति।

ब्राह्मे—

मन्त्रादितर्पणे चाऽपि प्रजानां शान्तिकर्मणि।
राज्यनाशस्तु येन स्याद्विना राज्ञा स्वमण्डले।
आशौचं न भवेल्लोके सर्वत्राऽन्यत्र विद्यते ॥ इति।

यमबृहस्पती—

दैवे भये समुत्पन्ने प्रजानां च विनाशने।
सद्यःशौचं समाख्यातं कान्ताराऽपदि संयति। इति।

तथा तत्प्रेषितस्य=तेन राज्ञा प्रेषितः आज्ञप्तस्तदधिकृतो मन्त्रिपुरोहितादिरिति यावत्। तस्याऽपि तदुपसन्धानेन तदीयमन्त्रस्यस्यमनादौ नाशौचम्। तदाहतुः शङ्खलिखितौ—

राज्ञः पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रयात्। इति।

अत्र तदाश्रयादितिहेतुवचनाद्राजकार्येष्वनन्यनिरपेक्षेपु शुद्धिरिति भावः । चकाराद्राजाज्ञाकारिणां राजभृत्यानां राजाऽपेक्षितानां च ग्रहणम् । तथा च शङ्खः—

नाऽशौचभाजः कथिता राजाज्ञाकारिणश्च ये । इति ।

प्रचेताः—

राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः । इति ।

राजभृत्या हस्त्यश्वदमनादिकारिणः । तथा च ब्राह्मे—

यत्कर्म राजभृत्यानां हस्त्यश्वदमनादिकम् ।

तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः ॥ इति ।

शातातपः—"यस्य च च्छन्देनेच्छन्ति नरेन्द्रास्तस्य च नाशौचम्" इति । छन्देन स्वेच्छया । पराशरोऽपि—

राज्ञां च सूतकं नास्ति यस्य चेच्छति पार्थिवः । (परा०३-२२) इति ।

यस्य कारुशिल्पिसूपकारवैद्यादेराशौचाभावं स्वकार्यसिद्धये राजा वाञ्छति तस्याऽपि नाशौचम् । तदाह ब्रह्मपुराणम्—

शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयन्त्यलम् ।

तत्कर्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि ॥

सूपकारेण यत्कर्म करणीयं नृपस्य हि ।

तदन्यो नैव जानाति तस्माच्छुद्धस्तु सूपकृत् ॥

चिकित्सको यत्कुरुते तदन्येन न शक्यते ।

तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः ॥ इति ।

यद्यप्येषामेषा स्वभावतोऽपि शुद्धिस्तथाऽपि राज्ञाऽपेक्षितानां सुतरामियं भवतीत्यत्रोक्तिः । तथा च वर्द्धमानः=प्रतिदिनमुपचीयमानः, आमयो ज्वरादिर्यस्य तस्य । तन्निवर्तकेषु कर्मविपाकेषु स्नानदानजपहोमादिरूपेषु कर्तव्येषु । तथा=नाशौचम् । तदाह पराशरः—

उद्यतो निधने दाने आर्तो विप्रो निमन्त्रितः ।

तदैव ऋषिभिर्दृष्टं यथाकालेन शुध्यति ॥ (परा०३-२३) इति ।

निधने उद्यतो=मुमूर्षुः । आर्तो=व्याधिपीडितः । दाने तदुपशामके कर्मविपाके निमन्त्रितश्च विप्रस्तदैव शुध्यतीति ऋषिभिर्दृष्टम् । यथाकालेन दशाहादिनेत्यर्थः । सङ्ग्रहेऽपि—

*दाने विहिते आर्तस्य व्याधिना शुद्धिरुच्यते ।*

यो नियतोऽपि यो यस्तु दातुं हेमादि वाञ्छति ॥ इति ।

व्याधिना आर्तस्य विहितव्याधिपरिहारकमादिव्याद्दिदाने नियदादौ च शुध्यतीत्यत इत्यर्थः ॥ ७८ ॥

अपि च—

जन्मप्रभृतिपापानां निरासे च मरिष्यतः ।
उत्क्रान्तिवैतरण्यादिदाने प्रेताहुतिष्वपि ॥ ७२ ॥

जन्मप्रभृतीति । जन्मप्रभृति जन्मत आरभ्य कृतानां प्रकाशकृतमहापातकव्यतिरिक्तानां कायिकवाचिकमानसिकानां पापानां निरासे निरस्यते अनेनेतिनिरासस्तस्मिन्निरासे प्रायश्चित्ते मरिष्यतः मुमूर्षोर्नाशौचम् । तथा अनायासेन प्राणोत्क्रमणसिद्ध्यर्थं विहितं उत्क्रान्तिधेनुदानं, यमद्वारस्थितवैतरणीनामकनद्युत्तारणाय विहितं कृष्णगवीदानं, आदिशब्देन देवपितृमनुष्यऋणापाकरणाय विहितमृणधेनुदानं, सकलपातकापनोदाय विहितं पापधेनुदानं च गृह्यते । तत्राऽपि मुमूर्षोर्नाशौचम् । धेनुचतुष्टयदाने साङ्गे सर्वप्रायश्चित्ते च मुमूर्षोर्नाशौचमित्यर्थः । अन्तरेव मरणसम्भवे नाशौचम् । अतिपातनस्य प्रतीक्षाया असम्भवात् । तदुक्तं स्मृत्यन्तरे—

प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा । इति ।

वृद्धपराशरोऽपि—

तपोदानप्रवृत्तेषु नाऽशौचं विद्यते क्वचित् । इति ।

पराशरोऽपि—"उद्यतो निधने दाने" ( परा०३–२३ ) इति । विवृतं चैतदधस्तात् । तथा प्रेताऽऽहुतिष्वपि नाशौचम् । प्रेताहुतयः प्रेतोद्देशेन क्रियमाणाः पिण्डोदकदानादयः तेषु आशौचान्तरमृतस्य प्रेतस्य पिण्डोदकदानादौ न पूर्वाऽऽशौचं प्रतिबन्धकमिति भावः । तदाह शातातपः—

अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः ॥
आरब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत् ।
तथैवाऽऽशौचपिण्डांस्तु शेषान्दद्याद्यथाविधि ॥ इति ।

गालवोऽपि—

शावेऽपि सूतकं चेत्स्यान्निशाशेषे तथैव च ।
नवश्राद्धानि देयानि यथाकालं यथाक्रमम् ॥ इति ।

तथैव शावाऽऽशौचयोः सन्निपाते प्रेतकृत्यं कार्यम् । तुल्यन्यायत्वादिति ॥ ७२ ॥

एवमाशौचाऽतिपातनप्रतीक्षासहिष्णूनि कर्माण्यभिधाय पृष्टाकोटेन तेषामभिधानायोगाद्विगमिधानेनाह—

एवंविधानां चान्येषां नाशौचं न च सूतकम् ।
कर्तव्यान्येव कर्माणि यथा पुण्यस्तथैव सः ॥८०॥

एवं विधानामिति । एवं विधाः=प्रकारो येषां तेषां राज्ञां कोपातिशयेन चण्डत्वादिना ऽऽहतानां दृढनिगडाऽधिरूढानां च बहुलजलकल्लोलकलिलजलधितरणाय तरणिमधिष्ठितानां तत्तदापदुद्धाराय स्तोत्रयन्त्रमन्त्राराधने नाशौचम् ।

आपद्यपि च कष्टायां सद्यःशौचं विधीयते । ( या० ३-२९ )

इतिस्मरणात् । अन्येषां च श्राद्धकर्तृभोक्तृप्रभृतीनां च नाऽऽशौचम् तदुक्तं स्मृत्यन्तरे—

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।
निमन्त्रितस्य विप्रस्य स्वाध्यायादिरतस्य च ॥
देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित् ।
गृहीतनियमस्याऽपि न स्यादन्यस्य कस्यचित् ॥ इति ।

ब्राह्मेऽपि—

अथ देवप्रतिष्ठायां गणयागादिकर्मणि ।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत् ॥
अथ दातृप्रहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन ॥
विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ।
भोजनार्द्धे तु सम्भुक्ते विप्रैर्ज्ञातुर्विपद्यते ॥
यदि कश्चित्तदोच्छिष्टशेषं त्यक्त्वा समाहितः ।
आचम्य परकीयेन जलेन शुचयो द्विजाः ॥
विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
शेषमन्नं परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत् ॥ इति ।




अत्र देवप्रतिष्ठादौ पूर्वसम्भृतसम्भारे इति द्रष्टव्यम् ।

यज्ञे सम्भृतसम्भारे विवाहे श्राद्धकर्मणि ।

इति स्मृत्यन्तरात् । "न देवप्रतिष्ठाविवाहयोः पूर्वसम्भृतयोः" इति विष्णुस्मरणाच्च । 'कन्यादाने' इति चौलोपनयनादिसंस्कारस्याप्युपलक्षणम् । "देवप्रतिष्ठोत्सवयज्ञेषु" इतिविष्णुस्मरणात् । पूर्वसङ्कल्पितद्रव्यदानेऽपि नाऽऽशौचम् ।

पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ।

इतिक्रतुस्मरणात् । नाऽऽशौचं न च सूतकम् । जननमरणनिमित्त-

माशौचं नास्ति। अतोऽन्यथाऽनुपपन्नानि प्रतिप्रसूतानि च कर्माणि कुर्यादेव। यथा पुण्यः=आशौचाऽभाववान् तथैव सः इति। अत्र पुण्यत्वातिदेशबलादेव न सर्वत्र पुण्यत्वं, किं तु केष्वेवेति पूर्वोक्तमपि पुनरुक्तभ्रमनिरासायोक्तम्॥ ८१॥

एवमनुयोगिविशेषेणाऽऽशौचमपोद्य सम्प्रति प्रतियोगिविशेषेणाऽप्यपवदति—

> कामतो दुर्मृतः कश्चित्पतितः क्लीब एव वा॥
> तन्मृतौ तु सगोत्राणां नैवाऽऽशौचं विधीयते॥ ८२॥

कामत इति। यः कश्चित्कामतो बुद्धिपूर्वं दुर्वैरविहितैः भृग्वग्न्यनशनाम्बुविषशस्त्रोद्बन्धनप्रभृतिभिर्मृतस्तस्य सगोत्राणां सपिण्डानां तन्मृतिनिमित्तं नैवाऽऽशौचमस्ति। आशौचमित्युपलक्षणम्। तेन दाहपिण्डोदकदानादिकमपि न कार्यम्। तदाहाऽऽपस्तम्बः—

> व्यापादयेदिहात्मानं स्वयं योऽग्न्युदकादिभिः।
> विहितं तस्य नाऽऽशौचं नाग्निर्नाप्युदकक्रिया॥ इति।

अत्रादिशब्दसंग्राह्यमाहाङ्गिराः—

> चण्डालादुदकात्सर्पाद्विद्युतो ब्राह्मणादपि।
> दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम्॥ इति।

यद्यपि चण्डालादिहतानामात्मघातित्वं न सम्भवति स्वमरणाऽनुकूलव्यापाराभावात्, तथाऽपि दर्पाविष्टत्वेन तन्निग्रहे प्रवृत्तस्य तैश्च हतस्य बुद्धिपूर्वं मरणसंशये प्रवृत्तत्वादात्मघातिता भवत्येव। "सर्वत एवात्मानं गोपायेत्" इतिविध्यतिक्रमात् "न संशयं प्रपद्येत" इतिनिषेधातिक्रमाच्च। एवमेव बाहुभ्यां नदीं तरितुं प्रवृत्तस्य, सर्पादीन् ग्रहीतुमतिप्रवृत्तस्य सम्भावितोत्कटकोटिकमरणहेतुप्रवृत्तत्वादात्मघातिताऽस्त्येव। एवमन्यत्राऽप्यूह्यम्। अत एव ब्रह्मपुराणे—

> नागानां विप्रियं कुर्वन्दग्धश्चाऽप्यथ विद्युता।
> निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित्॥
> परदाराऽनुगन्ता च दोषात्तत्पतिभिर्हतः।
> असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम्॥
> कृत्वा तैर्निहतास्तांश्च चण्डालादीन् समाश्रिताः।
> शस्त्राऽग्निगरदाश्चैव पाखण्डाः क्रूरबुद्धयः॥
> क्रोधात्पापं विषं वह्निं शस्त्रमुद्बन्धनं जलम्।
> गिरिवृक्षप्रपातं च ये कुर्वन्ति नराऽधमाः॥

तथा प्रायश्चित्तार्थमात्मत्यागिनामपि नाऽऽशौचम् । तथा च गौतमः—"यस्य तु प्राणान्तिकं प्रायश्चित्तं, स मृतः शुद्ध्येत्तस्मिन्नुदकादीनि सर्वाणि प्रेतकार्याणि कुर्युः" ( गौ० ध० २०-१३,१४ ) इति । तथा पतितस्याऽपि प्रायश्चित्तमनुतिष्ठतो मरणेऽप्यस्त्याऽऽशौचम् ।

पतितोऽपि च यः कुर्वन् विशुद्धिं मरणान्तिकम् ।
तस्याऽऽशौचादि कर्तव्यं प्रेतकार्यं यथाविधि ॥

इतिस्मरणात् । *मरणान्तिकं प्राप्त इति शेषः* । तथा राज्ञा पापविशेषे वधदण्डे क्रियमाणे मृतस्याऽऽशौचमस्त्येव । तथा च ब्रह्मपुराणम्—

राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ इति ।

तथा यः पतितः पतनीयेन महापातकादिना युक्तः तन्मृतौ तन्मरणे तत्सपिण्डानां नाऽऽशौचम् । तदुक्तं ब्राह्मे—

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातः पिण्डश्च कार्यं श्राद्धादिकं क्वचित् ॥ इति ।

आदिशब्देनाऽऽशौचस्पर्शनवाहनादीनि गृह्यन्ते । तथा यः क्लीबो नपुंसकः तन्मृतौ तत्सपिण्डानां नाऽऽशौचम् ।

सुखेभगास्तु ये जीवाः क्लीबप्राया नपुंसकाः ।

इतिब्राह्मात् । तेषां नाऽऽशौचमित्यनेन सम्बन्धः । क्लीबशब्दो वानप्रस्थसन्न्यासिनोरप्युपलक्षकः । तदुक्तं स्मृत्यन्तरे—

देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ ।
मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः ॥ इति ।

ब्राह्मेऽपि—

सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च ।
न तस्य दहनं कार्यं नाऽऽशौचं नोदकक्रिया ॥ इति ।

सङ्गनिवृत्तः सन्न्यासी । चशब्दः पाषण्ड्यादिसङ्ग्रहार्थः । तदाह याज्ञवल्क्यः—

पाखण्ड्यनाश्रिता स्तेना भर्तृघ्न्यः कामगादिकाः ।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥ (या०३ ६) इति ।

सुराप्य इत्यादिषु लिङ्गमविवक्षितम्, उद्देश्यगतत्वात् । तथा—

हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ॥ (या०३-२१) इति ।

अन्वक्षं यावच्छवदर्शनमित्यर्थः । (यत्तु) नृपहतानामाशौचाऽभावो युद्धहतव्यतिरेकविषयः । (१)"गोब्राह्मणहतानामन्वक्षम्" (गौ.१४-९)

(१) कंसान्तर्गतो ग्रन्थः ख, पु, नास्ति ।

"राजक्रोधाच्चायुद्धे" (गौ० १४-१०) इति गौतमात्। (इति) प्राञ्चः। तन्न। अयुद्ध इत्यस्यापपाठात्।

> उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च।
> सद्यः सन्तिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः॥ (मनु० ५-९८)

इति स्मृत्यन्तरविरोधाच्च। तस्माद्युद्धहतस्याऽन्यक्षमेवाऽऽशौचमित्येव साध्विति हरदत्तः (१) युद्धहतस्य त्वेकरात्रम्।

> ब्राह्मणाऽर्थे विपन्ना ये योषितां गोग्रहेऽपि वा।
> आहवेऽपि हतानां च एकरात्रमशौचकम्॥ (परा० ३-२९)

इतिपराशरस्मरणात्। इदं च युद्धकालीनप्रहारेण कालान्तरमृतविषयम्। मध्येयुद्धं हतस्य तु सद्यःशौचम्।

> उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च।
> सद्यः सन्तिष्ठते यज्ञस्तथाऽऽशौचमिति स्थितिः॥ (मनु० ५-९८)

इतिमनुस्मरणात्। एतेन "भृग्वग्न्यनशनाम्भः संग्रामविद्युन्नृपहतानां नाऽऽशौचम्" "भृग्वग्निजलसंग्रामदेशान्तरस्थानामुदकक्रियाकार्ये सद्यःशौचं भवति" "युद्धहतानामनाशके च सद्यः शौचम्"इति विष्णुसुमन्तुपैठीनस्यादिवाक्यानि व्याख्यातानि। यत्तु—"भृगुसङ्ग्रामदेशान्तरगतानां गर्भाणां जातदन्तानां त्रिरात्रेण" इति कश्यपस्मरणं तदपाङ्मुखस्य पलायनसमये हतस्येति ज्ञेयम्।

> शस्त्रेणाऽभिमुखो यस्तु वध्यते क्षत्रधर्मणा।
> सद्यः सन्तिष्ठते यज्ञः सद्यःशौचं विधीयते॥

इति यमेनाऽभिमुखहतस्य सद्यःशौचस्मरणात्। एतेन 'राज्ञः क्रोधमन्तरेण प्रमादादुत क्रोधेनाऽपि वा युद्धहतस्तदा सपिण्डानां सप्तमेऽऽशौचम्। "राजक्रोधाच्चायुद्धे" (गौ० १४-१०) इतिविशेषणद्वयोपादानात्, इतिहारलताविवरणमसंवरणमेवोपेक्षणीयम्। नन्वयं कामतो दुर्मृतानां दाहाऽऽशौचादिनिषेधोऽनाहिताग्निविषयो वाच्यः, आहिताग्निविषयत्वे तु "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति श्रुतिविहिताऽग्नियज्ञपात्रादिप्रतिलोपप्रसङ्गात्, इतिचेन्नैवम्। तदग्नीनां यज्ञपात्राणां चात्र प्रतिपत्त्यन्तरविधानात्। तदुक्तम्—

> वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे।
> पात्राणि तु दहेदग्नौ यजमाने वृथामृते॥ इति।

---

(१) कंसान्तर्गतो ग्रन्थः ख० पु० नास्ति।

तथा तच्छरीरस्याऽपि प्रतिपत्त्यन्तरमुक्तं स्मृत्यन्तरे—

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥ इति ।

यत्तु—

विषोद्बन्धनशस्त्राद्यैरात्मानं यस्तु घातयेत् ।
मृतो मध्येन लेप्तव्यो नाऽस्य संस्कारमर्हति ॥

इतिपराशरेण मध्यलेपनमुक्तं तद्राज्ञो अतिप्रसङ्गनिवृत्तये कार्यम् । गङ्गातोये प्रक्षेपस्तु तदीयैस्तत्संस्कारार्थं कार्य इति न विरोधः । नन्वेवम्—

चण्डालेन श्वपाकेन गोभिर्विप्रो हतो यदि ।
आहिताग्निर्मृतो विप्रो विशेषेणात्मघातकः ॥
दहेत्तं ब्राह्मणं विप्रो लोकाऽग्नौ मन्त्रवर्जितम् ।
दग्ध्वाऽस्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः ॥
स्वेनाऽग्निना स्वमन्त्रेण पृथगेतत्पुनर्दहेत् ।

इतिपराशरस्मरणं विरुध्यते, तच्छरीरस्य गङ्गातोये प्रतिपादितत्वेन लौकिकाग्निना दाहासम्भवेन अस्थिग्रहणाऽसम्भवात् । तदग्नीनामपि प्रतिपादितत्वेन पुनः स्वेनाऽग्निना तदस्थिदाहाऽसम्भवाच्च इतिचेत्, मैवम् । तद्देहाऽग्निप्रतिपत्तिविधायकादस्य पक्षान्तरविधायकत्वेन विरोधपरिहारात् । तदौर्ध्वदेहिकमप्यस्य कथं स्याद्देहाग्न्योः प्रतिपादितत्वेन दाहाऽसम्भवादिति चेत्, सत्यमेवैतत् । देहाग्न्योः प्रतिपत्त्या दाहोत्तरकालीनाया उदकादिक्रियाया एव तत्रेष्टत्वात् । अत एव त्रिकाण्डमण्डनः—

अग्नौ सति स्यादथ देहकल्प्ति-
रस्थ्नस्ति चेदग्निरपेक्षणीयः ॥
अस्थ्नामलाभे तु शरीरकस्य
विनष्टयग्रहेदुदकक्रियैव ॥ इति ।

अस्यार्थः—अग्नौ सति देशान्तरे मरणादिना देहाऽभावे पलाशपत्रादिभिर्देहः कल्पनीयः। देहाऽस्थिसद्भावे प्रेताधानविधिना विच्छिन्नो प्यग्निराहरणीयः। प्रतिपत्त्यादिना देहास्थ्यभावे अग्नेरपि तथ्याऽभावे उदकक्रियामारभ्यैव और्ध्वदेहिकं कार्यम् । उभयप्रतिपत्तौ दाहस्य लुप्तत्वादिति । अत एव गौतमेनाऽपि "यस्य प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत् । (गौ० २०-१४) तस्मिन्नुदकादीनि सर्वाणि प्रेतकार्याणि कुर्युः" ( गौ० २०-१५ ) अत्र उदकादीन्येवोक्तं न तु दाहादीनीति ।

न च दाहाऽभावे शरीरसंस्काराऽभावादग्रेतनक्रियायामप्यनधिकारः इति वाच्यम् । सन्न्यासिनो निखननस्येवाऽत्र गङ्गादितोये प्रक्षेपस्यैव शरीरसंस्कारकत्वान्न सर्वत्र दाहनियमः । न च

गोब्राह्मणहतानां च पतितानां तथैव च ।
ऊर्ध्वं सम्वत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

इति षट्त्रिंशन्मतवचने सर्वत्वश्रुतिविरोध इति वाच्यम् । "सर्वत्वमाधिकारिकम्" इतिन्यायेन दाहव्यतिरिक्तस्यैव कृत्यस्य सर्वशब्देन परामर्शात् । ततश्चाऽयं निर्गलितोऽर्थः—आत्मघातादिना दुर्मृतस्याऽऽहिताऽग्नेः शरीरं गङ्गादिपुण्यनदीतोये प्रक्षिप्य तदीयं वैतानं चाप्सु प्रक्षिप्य आवसथ्यं च चतुष्पथे प्रक्षिप्य सम्वत्सराऽनन्तरमुदकदानादिकामौर्ध्वदेहिकक्रियां कुर्यात् । अथ वा तदेव लौकिकाऽग्निना तं दग्ध्वा तदस्थीनि क्षीरादिना प्रक्षाल्य सम्वत्सरान्ते मृताऽग्निहोत्रेण रक्षितैरग्निभिर्विधिवद्दाहं विधाय सर्वमौर्ध्वदेहिकं कुर्यात् । अत एव छन्दोगपरिशिष्टे कात्यायनः—

महापातकसंयुक्तो दैवात्स्यादग्निमान् यदि ।
पुत्रादिः पालयेदग्नीन्युक्त आदाय स क्षयात् ॥ इति ।

महापातकादियोगः पातित्यहेतूपलक्षणार्थः । तेनात्मघातिप्रभृतीनामपि पातित्यमस्तीति निरूपितमेव प्राक् । तथा च कलिप्रधानपराशरोक्तत्वेनायमेव पक्षः शिष्टाचाराऽनुगतः प्रतीयते । पक्षद्वयेऽप्यावाघातप्रायश्चित्तं प्रेतशुद्ध्यर्थं नारायणबलिं च कृत्वैवौर्ध्वदेहिकं कार्यम् । तदुक्तं—

नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ इति ।
नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते ।
तस्य शुद्धिकरं कर्म तद्भवेन्न तदन्यथा ॥ इति ।

*विशेषान्तरं श्राद्धकल्पलतायामेवोक्तमिति नेहोच्यते* ॥ ८१ ॥

"इतरेऽपिसमारब्धप्रयोगा" ( पृ० ७४ )इत्यादौ प्रयोगाऽऽरम्भे काऽऽशौचमित्युक्तं तत्राऽऽरम्भ एव क इत्याकाङ्क्षायां तं लक्षयति—

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ ८२ ॥

प्रारम्भ इति । यज्ञे ज्योतिष्टोमादौ ऋत्विग्वरणं प्रारम्भस्तस्मिन् कृते

आशौचपातेऽपि याज्ययाजकयोर्न दोष इत्यर्थः। तदुक्तं ब्रह्मपुराणे—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः।
पश्चाद्दशाहे पतिते न भवेदिति निश्चयः॥ इति।

यद्यपि मधुपर्कवरणानन्तरं न भवति तथाऽपि 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्" इत्यनेनाऽव्यवधानबोधनान्मधुपर्कशब्दो वरणं लक्षयति। तथा—

तथा गृहीतदीक्षस्य त्रैविद्यस्य महामखे।
स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते॥ इति।

अत्राऽपि गृहीतप्रायदीक्षस्येत्येवं व्याख्येयम्। अव्यवहितत्वात्। व्रते अनन्तव्रतादौ। सत्रे गवामयनादौ। यज्ञशब्देन सिद्धेऽपि सत्रग्रहणे तत्र यजमानानामेव ऋत्विक्कार्यकरत्वेन वरणाऽभावादुक्तारम्भासम्भवेन पृथक् सत्रनिर्देशः। सङ्कल्पः प्रारम्भः। तत्प्रभृत्याशौचदोषाऽभावः। तथा विवाहोपनयनचौलादिषु संस्कारेषु, तथा तडागोत्सर्गमहादानादिषु, नान्दीमुखं नान्दीमुखपितृगणश्राद्धमारम्भः। तस्मिन् कृते नाऽऽशौचदोषः। तदुक्तं सङ्ग्रहे—

प्रारम्भादूर्ध्वमाशौचं विवाहः कार्य एव तु।
निमन्त्रणं तु वा श्राद्धे प्रारम्भः स्यादिति श्रुतिः॥ इति।

प्रारम्भो नान्दीमुखात्। यदि तु बलवत्यनुपपत्तिस्तदाऽऽशौचसम्भावनायां नान्दीमुखं कर्तव्यमपीत्युक्तं सङ्ग्रहे—

भाव्यं तु सूतकं ज्ञात्वा मातॄणां पूजनं भवेत्।
सूतकं न विशेत्तत्र मातरो यत्र पूजिताः॥ इति।

तस्य कियद्दिनं पूर्वमनुष्ठानमपेक्षितमित्युक्तं तत्रैव—

एकविंशत्यहर्यज्ञे विवाहे दश वासराः।
षडुपनयने चैव चौले चैव त्रिरात्रकम्॥ इति।

एवं कथंचिन्नान्दीमुखाऽकरणेऽपि बलवदनुपपत्तावाशौचमध्येऽपि विवाहाद्यर्थं शुद्ध्युपायमाह विष्णुः—

अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद् घृतम्।
गां दद्यात् पञ्चगव्याशी ततः शुद्ध्यति सूतकी॥ इति।

कूष्माण्डैः="यद्देवा देवहेडनं" इत्यादिमन्त्रैः। तथा श्राद्धे=एकोद्दिष्टे पार्वणे च पाकपरिक्रिया परैः साकल्यापेक्षाद्यापत्पाकनिष्पत्तिः प्रारम्भः। पाके निष्पन्ने नाऽऽशौचदोष इत्यर्थः। यत्तु—

निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि।
निमन्त्रितस्य विप्रस्य स्वाध्यायाद्विरतस्य च॥

देहे पितृषु तिष्ठत्सु नाऽऽशौचं विद्यते क्वचित्। इति,
तस्मिन्नन्त्रणस्याऽपि प्रारम्भत्वमभिप्रेत्येति ध्येयम्। तदुक्तं सङ्ग्रहे-

निमन्त्रणं तु वा श्राद्धे प्रारम्भः स्यादिति श्रुतिः। इति।

यद्वा पूर्वेद्युर्निमन्त्रणे तस्यैव प्रारम्भत्वं, सद्यो निमन्त्रणे तु पाकपरिक्रिया इति व्यवस्था। अत्र च

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥
प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया॥

इत्यादिमूलसमरूपं विष्णुवचनमेव मूलमिति ध्येयम्॥ ८२॥

एवं सविशेषं साऽपवादमाशौचं निर्णीय तन्निमित्तामुदककियां कर्तृविशेषनिर्णयद्वारेणाह—

ज्ञातीनां मरणे ब्रह्मचारिणां नास्त्यशौचिता॥
अतस्तिलोदकं तेभ्यो न दद्युर्ब्रह्मचारिणः॥ ८३॥

ज्ञातीनामिति। यतो ज्ञातीनां मातापितृव्यतिरिक्तानां मरणे ब्रह्मचारिणामाशौचं नास्तीत्युक्तं प्राक्। अतःऽऽमाशौचाभावात्। ब्रह्मचारिणस्तेभ्यो ज्ञातिभ्यः। तिलोदकं न दद्युः। तदाह याज्ञवल्क्यः—

न ब्रह्मचारिण कुर्युरुदकं पतितास्तथा। (या० ३-५) इति।

मनुरपि—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्। (मनु० ५-८८) इति।

आदिष्टं='ब्रह्मचार्यसि' इत्यादिमतं यस्याऽसावादिष्टी ब्रह्मचारी। आ व्रतस्य समापनात्। आ समावर्तनादित्यर्थः। आदिष्टी='प्रक्रान्तप्रायश्चित्तः' इत्येके। तस्य

प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा।

((१)इति ब्राह्मणोऽऽशौचाऽभावबोधनात्। तर्हि कथं कुर्यादित्यत आह स एव—

समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत्। (मनु० ५-८८) इति।)

कात्यायनोऽपि—

आशौचं कर्मणोऽन्ते स्यात्त्र्यहं वा ब्रह्मचारिणाम्। इति॥ ८३॥

---

(१) कंसान्तर्गतो ग्रन्थः ख० पु० नास्ति।

तर्हि मातापितृविषये कथमित्यत आह—

मातापितृमृतौ ब्रह्मचारिणां चास्त्यशौचिता ॥
पितृभ्यामपि तैस्तस्माद्देयमेव तिलोदकम् ॥ ८४ ॥

मातेति । मातापित्रोर्मरणे ब्रह्मचारिणामप्याशौचमस्त्येव । तेन तैर्ब्रह्मचारिभिः पितृभ्याम्, अपिशब्दादाचार्योपाध्यायगुरुभ्यश्च तिलोदकं देयमेव यथाह शङ्खः—

जनने मरणे चैव नाऽऽशौचं ब्रह्मचारिणाम् ।
पित्रोर्मरण एव स्यादाशौचमुदकं तथा ॥ इति ।

तिलोदकमिति प्रेतक्रियामात्रोपलक्षणम् । तदाह वशिष्ठः—"ब्रह्मचारिणः शवकर्मिणो व्रतान्निवर्तेरन् । अन्यत्र मातापित्रोः"(वशि०२३-७,८) इति । वहनदहनोदकदानाऽऽशौचादि शवकर्म तत्कृतो ब्रह्मचारिणो ब्रह्मचर्यलोपो मातापित्राचार्योपाध्यायव्यतिरेकेण । तेषामेतत्करणे न व्रतलोप इत्यर्थः । तदाह मनुः—

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते॥ (मनु० ५-९१) इति।

याज्ञवल्क्योऽपि—

आचार्यपित्रुपाध्यायान्निर्हृत्याऽपि व्रती व्रती ।
सकटान्नं च नाश्नीयान्न च तैः सह संवसेत्॥(या० ३-१५)इति

व्रती=ब्रह्मचारी व्रत्येव न व्रतच्युत इत्यर्थः । सकटान्नम्=आशौचान्नम्, पित्राद्याशौचेऽपि नाऽश्नीयात् । तदुक्तं ब्रह्मपुराणे—

आचार्यं वाऽप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् । इति ।

यत्तु स्मृतिचन्द्रिकायाम्—

मातापित्रोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः ।
स व्रतस्थोऽपि कुर्वीत अग्निपिण्डोदकक्रियाम् ॥
तेनाशौचं न कर्तव्यं सन्ध्या चैव न लुप्यति ।
अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः ॥

इतिसंवर्तस्मरणम्, यच्च छन्दोगपरिशिष्टे—

न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित् ।
न दीक्षणात् परं यज्ञे न कृच्छ्रादि तपश्चरन् ॥

पितर्यपि मृते नैषां दोषो भवति कुत्र चित् ।
आशौचं कर्मणोऽन्ते स्यादूह्यहं वा ब्रह्मचारिणाम् ॥

इतिकात्यायनवचनम्, तदुभयं नैष्ठिकब्रह्मचारिविषयत्वेन व्याख्येयम् ।

नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाऽऽशौचं कीर्तितं सद्भिः पतिते च तथा मृते ॥

इतिकूर्मदेवलवाक्यात् । नैष्ठिकानामिति ब्रह्मचारिणां विशेषणम् । ब्रह्मचारिपदस्योपकुर्वाणकपरत्वेऽपि सपिण्डाऽऽशौचाभावबोधकत्वम्। संवर्तकात्यायनवाक्यानुरोधात् । न चानयोर्नैष्ठिकविषयत्वे "आशौचं कर्मणोऽन्ते स्यात्" इति विरुद्ध्येत ब्रह्मचर्यस्य मरणान्तिकत्वादिति वाच्यम्। ब्रह्मचर्यमध्ये एव त्र्यहाऽऽशौचरूपपक्षान्तरविधानार्थकत्वात्। अतः पुनर्ब्रह्मचारिग्रहणं नियमार्थम्। तेन दीक्षिततपस्विनोर्न कर्ममध्ये त्र्यहाऽऽशौचम्, किं तु सम्पूर्णमेव । "पित्रोस्तु मरणं विना" इतिपूर्वोदाहृतवचनात् । अन्ये तु दशाहिकप्रेतकर्ममध्ये त्र्यहमेवाऽऽशौचं कुर्यात्, अनन्तरं स्वकर्माऽनुतिष्ठन्नेव प्रेतकर्माऽऽचरेत् । वाशब्दस्त्वेकाहापेक्षया विकल्पार्थः । तथाहि ब्राह्मे—"आचार्यं वाप्युपाध्यायम्" इत्युपक्रम्य "प्रेतान्नं तत्र भक्षयेत्" इत्यस्याऽनन्तरं—

अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ।
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति ॥

इत्येकाहाऽऽशौचविधानात् । यत्तु प्रजापतिना—

*ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।*
*तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुध्यति ॥*

इत्युक्तं तत्संवर्तवाक्यैकवाक्यतया व्याख्येयम् । तस्मान्नैष्ठिकानां पित्रादिविमृत्यावरणे तावत्कालमेवाऽऽशौचमित्येकः पक्षः । एकाहाऽऽशौचमिति द्वितीयः । त्र्यहाऽऽशौचमिति तृतीयः । तदेषां पक्षाणां देशकालाद्यपेक्षया व्यवस्थेत्यलं बहुना ॥ ८४ ॥

किञ्च—

स्त्रीपाऽऽचारादपि भ्रष्टाः पतिता ये च दूषिताः ।
न कुर्युरुदकं ते वै तेभ्योऽप्यन्ये न चैव हि ॥ ८५ ॥

स्त्रीपाऽऽचारादिति । स्त्रीपाद्विरथोधिताद्याचारभ्रष्टाः । वेदस्मृतिसमार्गानुवर्तित्वात् । पतिताः महापातकादिपञ्चकर्माऽभिभूताः । एकारात्प्रलीयाः गर्भभर्तृद्रुहः पोषिताश्च गृह्यन्ते । दूषिता संस्कारहीना

मात्या। एते प्रमीतेभ्यः सपिण्डेभ्यः उदकं न कुर्युः। तदाह वृद्धमनुः—

क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विकर्मिणः।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः॥ इति।

अत एवमुदकदानकर्तृत्वमेषां प्रतिषिध्य उदकसम्प्रदानत्वमपि निषेधति–तेभ्योऽपीति। तेभ्यः पूर्वोक्तेभ्यः स्वाचारभ्रष्टादिभ्यः अपिशब्दात्सङ्करजातप्रव्रजितात्मत्यागिप्रभृतिभ्यो दुर्मरणमृतेभ्यः पूर्वोदाहृतेभ्योऽन्ये सपिण्डा उदकं न कुर्युः। तदाह मनुः—

वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम्।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया॥ (मनु० ५–८९),
पाखण्डमाश्रितानां च चरन्तीनां च कामतः।
गर्भभर्तृद्रुहां चैव सुरापीणां च योषिताम्॥(मनु ५–९०)इति।

वृद्धयाज्ञवल्क्योऽपि—

विद्युता नृपविप्राभ्यां शृङ्गिदंष्ट्रयसिघातिताः।
वृथोत्पन्नो महाक्लीबो व्रती नैवोदकार्हकः॥ इति।

महाक्लीबो लिङ्गरहितः। व्रती महाव्रती नैष्ठिकः। यमोऽपि—

वृथासङ्करजातानां आश्रमान्तरिताश्च ये।
दत्तानां चैव कन्यानां निवर्तेतोदकक्रिया॥ इति।

आश्रमान्तरिताः सत्यप्यधिकारे आश्रमरहिताः। स्वेच्छाकल्पिताऽऽश्रमा वा। दत्तकन्यानामुदकदानाऽभावस्त्वैच्छिकः।

कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् (या० ३–४)

इतियोगिस्मरणात्। प्रत्ताः कन्याभगिन्यादयः। एषां कामेन इच्छया उदकं देयमित्यर्थः। पारस्करोऽपि–"अथ कामोदकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभागिनेयानाम्" (पा०३–१०–४६) जातिबहिष्कृतस्याप्युदकं न कार्यम्। तदाहतुः शङ्खलिखितौ–"अपपात्रितस्य सकुर्यपिण्डोदकानि व्यावर्तन्ते"इति। अपपात्रितः पर्यस्तपात्रः। तथा अज्ञातवृत्तस्याऽपि उदकं न कार्यम्। तदाह पराशरः—

अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया(परा०३–१४) इति

नाऽऽशौचं सपिण्डानामिति शेषः। ऊनद्विवार्षिकस्याप्येवम्। तदाह मनुः—

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते॥ (मनु० ५–६८)

नास्य कार्योऽग्निसंस्कारो नाऽपि कार्योदकक्रिया ।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु ॥ (मनु० ५-६९) इति ।

एवमत्रिवर्षस्याऽपि । तदाह मनुरेव—

नाऽत्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । (मनु०५-७०) इति ।

कृतचूडानां तूदकक्रियानियमः, अन्यत्र तु विकल्प इत्यप्याह स एव—

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।
सर्वेषां कृतचूडानामन्यत्राऽपीच्छया द्वयम् ॥ इति ।
जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति । इति च ॥ ८५ ॥

एवमाशौचनिमित्तामुदकदानक्रियां कर्तृसम्प्रदाननिर्णयेनाऽभिधाय क्वचिदाशौचाऽभावेन तदपवादमाह—

अस्नानभोजना ये च ये च होमविवर्जिताः ॥
नास्तिकाः किम्भरिष्यन्तस्तेषां भस्मान्तसूतकम् ॥ ८६ ॥

अस्नानेति । स्नानपूर्वकं भोजनं स्नानभोजनम् । न विद्यते स्नानभोजनं येषां ते अस्नानभोजनाः स्नानव्यतिरेकेणैव भोक्तारो ये नराः ये च होमेन श्रौतेन स्मार्तेन वैश्वदेवेन च वर्जिता रहिताः । ये च नास्तिकाः—नास्ति परलोके मतिर्येषां ते नास्तिकाः । परलोको नास्तीति मत्वा विहिताऽननुष्ठातारो निषिद्धाऽनुष्ठातारश्च । तथा ये किम्भरिष्यन्तः कुत्सितं भरणं किम्भरः तं करिष्यन्तीति किम्भरिष्यन्तः । कुटुम्बस्य कुत्सितभरणशीलाः कदर्या इति यावत् । तदुक्तं—

आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः ॥ इति ।

अस्नानभोजना ये चेतिचकाराद्व्याधितऋणग्रस्तादिग्रहणम् । तेषां भस्मान्तसूतकम् । भस्मस्यान्तो भस्मान्तः—भस्मीभावः सोऽन्तो यस्य तद्भस्मान्तम् । एकस्यान्तशब्दस्य लोपः तच्च तत्सूतकं च भस्मान्तसूतकम् । सूतकशब्देनाऽऽशौचं लक्ष्यते । यावद्भस्मीभावमाशौचमित्यर्थः । तदाह दक्षः—

अस्नायी चाऽप्यहुत्वा च अदत्त्वाऽश्नाति यो द्विजः ।
एवंविधस्य विप्रस्य सर्वदा सूतकं भवेत् ॥
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥
व्यसनासक्तचित्तस्य पराऽधीनस्य नित्यशः ।
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥

४३ न्यायदर्शनम् । श्रीगोतममुनीप्रणितम् । श्रीवात्स्यायनमुनीप्रणित भाष्यसहितम् । श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम् । टिप्पण्यादिसहितम् (न्याय ६) रु० ३—०
४४ दानमयूख । विद्वद्वरश्रीनीलकण्ठभट्टविरचितः (धर्मशास्त्र१) रु० १—८
४५ कालमाधव । विद्वद्वरश्रीमाधवाचार्यविरचितः (धर्मशास्त्र२) रु० १—८
४६ भास्वती । श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता । (ज्योतिष ३) रु० २—०
४७ फक्किकाप्रकाश । उपाध्यायोपाह्वनैयाकरणकेसरीविरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचित — । पं० सीतारामशर्मकृतटिप्पण्या विभूषितः । (व्याकरण ७) रु० १—४
४८ मिताक्षरा । श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या-श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता । शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च । (वेदा०६) रु० १—४
४९ काव्यप्रकाशः । श्रीमम्मटाचार्यविरचित । पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः (का०प०४) रु०४ —०
५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १—०
५१ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् महामहोपाध्याय श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् प० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतम् सपूर्णम् । रु० १—४
५२ कातन्त्रबोध । सारजतीकृत टीकोपेत । दत्तात्रेय सम्प्रदायाऽनुगत । रु०—८
५३ रसचन्द्रिका । पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता (काव्य० ६) रु०१—०
५४ अलङ्कारमुक्तावली । पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेय-निर्मिता— (अल० वि० १) रु०-१२ ०

पत्रादिप्रेषणस्थानम्

जयकृष्णदास-हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर के उत्तर फाटक
बनारस सिटी ।

२९. कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमनोपाध्यायप्रणितप्रकाशसहितः (न्याय४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या–तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः । (मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि-गौतमादिचरितसम्वलितबृहत्भूमिकासहितम् । (न्याय) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १–२–३–४ ) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर–वामन–जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९. जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्योतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः–मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् ( भाग१—२ ) (मीमांसा ३) रु० १०—०

१४ कुमारसंभवं महाकाव्यम्। महाकवि-श्रीकालिदासवि०। सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहित। (छंदः १) रु० ०—६

१६ कारिकावली। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। (न्याय २) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकाण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पूर्त्तादिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृत-टिप्पण्यादिभिः सहितं च। (कर्मकाण्डं २) रु० ३—०

१८ संक्षेपशारीरकम्-मधुसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। (व्याकरणं २) रु० ०—८

२० कातीयेष्टिदीपकः। (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया (संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीत' सटीकन्यायबिन्दुः—भाषाटीकासहितः (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरण ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण (न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीय) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहित (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः (टिप्पणीसमलंकृतः) प्रथमो भाग श्रीरमाकान्तशर्मणा संगृहीतः। (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः। अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीय-कृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ८—०

२८ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम्। म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृतार्थप्रकाशिकाटीकया च समलङ्कृतम् (काव्यवि०३) रु० ०—१२

# काशीसंस्कृतसीरीज़्—पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमानानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परन्तु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्रा ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

तत्र मुद्रितग्रन्थनामानि । मूल्यम् ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८
२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्त १ ) रु० ८—०
३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं १) रु०२—८
४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६
५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावः । रु० ५—०
५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादि-समासान्तपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०
६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०
७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) रु० ०—८
८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । रु० ०—८
९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं १) रु० ०—१२
१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०
११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-सूत्रसहितम् । ( कर्मकाण्डम् १) रु० ०—८
१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४
१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च सहितम् । ( वेदान्तं ३ ) रु० १—४

## काशीसंस्कृतसीरीज़-ग्रन्थमाला।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति। एतस्या प्राचीना, नवीनाश्च दुर्लभा, सुलभाश्च अत्युपयुक्ता संस्कृतग्रन्था काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति। अस्या प्रकाश्यमाणाना ग्रन्थाना मूल्यं सूचीपत्रे प्रकाशितं वर्तते।

तत्र मुद्रितग्रन्थनामानि। मूल्यम्।

१ नलपाकः नलविरचितः। संपूर्णः (पाकशास्त्रम् १) रु० १—८

२ संक्षेपशारीरकम्। रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम्। (वेदान्तं १) रु० ८—०

३ वैशेषिकदर्शनम्। पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं१)रु०२—०

४ श्रीसूक्तम्। विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम्। (वैदिकं १) रु० ०—६

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः। (व्याकरणं १) रु० ५—०

५ लघुशब्देन्दुशेखरः (भैरवी) चन्द्रकलाटीकासहितः तत्पुरुषादिसमासिपर्यन्तः। द्वितीय भाग (व्याकरणं १) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता। (न्यायं १) रु० ६—०

७ पञ्चीकरणम्। वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम्। (वेदान्तं २) रु० ०—८

८ अलङ्कारप्रदीपः। श्रीविश्वेश्वरपाण्डेयनिर्मितः। (काव्य १) रु० ०—८

९ अनङ्गरङ्गः। महाकविकल्याणमल्लविरचितः। (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः। श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम्। कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम्। (कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम्। सायणभाष्य-महीधरभाष्य-संगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम्। (वैदिकं २) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च सवलितम्। (वेदान्तं ३) रु० १—४

१४ कुमारसंभवं महाकाव्यम्। महाकवि श्रीकालिदासवि०। सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम्। (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहित। (छंदः १) रु० ०—६

१६ कारिकावली। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। (न्यायं २) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यस

हितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवक-
ण्डिकासूत्रैः यमलजननशान्ति-वृष्टोदिवि-शौच-भोजन—
कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृत-टिप्प-
ण्यादिभिः सहितं च । (कर्मकाण्ड २) रु० ३—०

१८ संक्षेपशारीरकम् । मधुसूदनीटीकासहितम् संपूर्ण (वेदान्त४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनि-
मितिः । (व्याकरण २) रु० ०—८

२० कातीयेष्टिदीपकः । (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-
पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । (कर्मकाण्ड) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम् । श्रीगन्धर्वराज पुष्पदन्ताचार्य-
विरचितम् । हरिहरपक्षीय-मधुसूदनीटीकया (संस्कृतटी-
का-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषा,
विम्व) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च
समन्वितम् । (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः । भाषाटीका-
सहितः । (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः । (व्याकरण ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्यटीका । श्रीवाचस्पतिमिश्रविरचिता । सम्पूर्ण
(न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः । (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया
सारविवेचिन्या व्याख्यया सहितः । (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः । (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमा-
कान्तशर्मणा संगृहीतः । (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययी-
भावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीय-
कृतदोषरदीपकाख्येन टिप्पणेन समुज्ज्वलितः । (व्या०४) रु० ४—०

२८ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् पञ्चसर्गा-
त्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया
पं० श्रीकनकलालठक्कुरकृतार्थप्रकाशिकाटीकया च सम-
लङ्कृतम् । (काव्यवि० ३) रु० ०—१२

२९ कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरक्षा(?)दितया पूर्णया
जयमङ्गलरचितया टीकया समेतम् । बहुपण्डितपाठान् परिपु-
र्य, सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलिः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचि-
तः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमा-
नोपाध्यायप्रणीतप्रकाशसहितः । (न्याय ४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरव-
मिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या-तत्त्व-
प्रकाशिकया टीकया च सहित- । (व्याकरण ५) रु० ३—०